॥ श्रीगणेशाय नमः ॥

# जागदीशीसामान्यनिरुक्तिः ।

अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं, ज्ञायमानं सद्यदनुमितिबन्धकं तत्त्वं वा हेत्वाभासत्वं, दशाविशेषे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वं यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वं तथापि ज्ञायमानस्याऽऽभासस्यात्र लक्षणम् । यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यतेऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते ते च सव्यभिचार-विरुद्ध-सत्प्रतिपक्षासिद्धबाधिताः पञ्चेति चिन्तामणौ सामान्यनिरुक्तिः ।

१ ननु स्वरूपसम्बन्धरूपप्रयोजकत्वापेक्षया ऽन्यथासिद्धिशून्यत्वघटितकारणत्वनिवेशनं गौरवग्रस्तमितिचेन्नाऽप्रामाण्यज्ञानाभावविशिष्टपरामर्शत्वेन कारणत्वस्य वक्तव्यतयाऽप्रामाण्यज्ञानाभावस्यापि प्रयोजकत्वेन तत्प्रतियोगिअप्रामाण्यज्ञानविषयीभूतपरामर्शस्य दोषत्वापत्तेः अतः कारणीभूताभावप्रतियोगित्वमुक्तं, भूतपदं तु कारणस्याभाव इति षष्ठीतत्पुरुषभ्रमनिराकरणार्थम् ॥ नचाभावपदं व्यर्थमनुमितिकारणीभूतो यस्तत्प्रतियोगित्वनिवेशे ऽयमात्माऽऽत्मत्वप्रकारकज्ञानप्रतियोगिकसमवायादित्यादौ ज्ञायमानलिङ्गस्य कारणत्वमते आत्मत्वेऽतिव्याप्तेः नचानुमितिकारणीभूतो यस्तन्निरूपितकिञ्चित्सम्बन्धावच्छिन्नप्रतियोगित्वाश्रययथार्थज्ञानविषयत्वनिवेशे नोक्तदोषः सांसर्गिकप्रतियोगित्वस्य किञ्चित्सम्बन्धावच्छिन्नत्वविरहादितिवाच्यं तत्सम्बन्धीयप्रतियोगित्वस्य तत्सम्बन्धावच्छिन्नाधेयत्वस्वरूपतया तस्यापि तत्सम्बन्धावच्छिन्नत्वसत्त्वात् अनुमितिकारणीभूताभावप्रतियोगियथार्थमात्रविषयत्वनिवेशे कामिनीजिज्ञासायाः स्वविषयज्ञानातिरिक्तत्वावच्छिन्नं प्रति प्रतिबन्धकत्वात् तद्विषये कामिनीज्ञानेऽतिप्रसक्तिरतो ज्ञानपदम् ।



श्रीगणेशाय नमः। एतावत्प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात्तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति। अनुमितीति। यथाश्रुतमिदं हेतुदोषाणां लक्षणं तद्वत्त्वं च दुष्टहेतूनां तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति तत्रानुमितिपदमनुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा तेनैकत्रहेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद् व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति। पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह—यथार्थेति। ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः। अथ विशिष्टविषयज्ञानं प्रतिबन्धकं तद्घटकं च न विशिष्टमितिचेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्या-

प्रसिद्धत्वादित्याशयेनाह यदिति । केचित्तु दुष्टा-
नामेव हेतूनामेतानि लक्षणानि तत्र तृतीयमिव
प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्ध-
कत्वमभ्युपेत्य तदर्थश्च तादृशाभावप्रतियोगि-
नो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञान-
विषयत्वमग्रे च तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः ।
आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः ।
लिङ्गमविवक्षितं यद्विषयकत्वेन यादृशविशिष्ट-
विषयकत्वेन तेनानुमितिप्रतिबन्धकपक्षविशे-
ष्यकभ्रमाविषये साध्याभावादौ सद्धेत्वादिनिष्ठे
नातिप्रसङ्गः । अवच्छेदकत्वं चेहानतिरिक्तवृ-
त्तित्वं तेन विशिष्टस्यासत्त्वेपि भ्रमात्प्रतिबन्धेपि
न क्षतिः । विशेषणीयं च तादृशविशिष्टा-
न्तराघटितत्वेन तेन प्रमेयत्वादिविशिष्टे सव्य-
भिचारादौ नातिप्रसङ्ग, एवं च पक्षतावच्छेदका-
दिविरहविशिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा
साध्याभाववद्वृत्तिसाधनं, साधनवद्वृत्तिसाध्याभा-
वो वा हेतुदोषः । येन केनापि सम्बन्धेन त-
द्वाँश्च प्रकृतो हेतुर्दुष्टः । यादृशधर्मिणि यादृश-

धर्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित् । अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्व्वतादेः काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्वं पर्वतस्य महानसीयवह्निधूमविरहित्वं मेयत्वस्य केवलधूमस्य वा वह्निव्यभिचारो विशिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः । न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम् अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यं, तथा च निर्व्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्व्वतावृत्तेर्वा धर्मादित्यादौ न कोपि हेत्वाभासः स्यात्तादृशानुमितेरप्रसिद्धत्वादिति । अत्र वदन्ति यद्विषकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरमनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यानिरूपित-

व्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्ताव-
गाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं
पक्षतावच्छेदकवैशिष्ट्यादिकं वैज्ञानिकं न तु
वास्तवं ग्राह्यं व्याप्तिश्चान्वयतोव्यतिरेकतश्च
वाच्या तादृशावगाहित्वप्रसिद्धिराहार्यज्ञानए-
वाभ्युपेतव्याऽनन्यगतिकत्वात् । एवं च वस्तु-
मात्रनिश्चयादनन्तरं निर्वह्नित्वादिविशिष्टे वह्ने-
रग्रहेपि न क्षतिस्तस्य विरोध्यविषयकत्वात् ।
एवं साध्यनिश्चयोत्तरं तस्याननुमितावपि मान-
सज्ञानाविरोधित्वाच्च । तादृशपक्षे तादृशसाध्यवै-
शिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्ट-
तादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य य-
द्विषयकं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञान-
विरोधित्वं वा हेतुदोषत्वं, ज्ञानविरोधित्वं च त-
द्विषयविषयकग्रहविरोधिग्रहविषयत्वम् एवं-
विधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणा-
दावनुसर्त्तव्या इत्यपि केचित् ॥ केचित्तु यादृश-
पक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः
सम्भवन्ति तावदन्यान्यत्वमेकमात्रदोषस्थले च

तत्त्वमेव हेत्वाभासत्वं स चातिरिक्त एवान्यो-न्याभाव इति न वैयर्थ्यं पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण व्यभिचारादेः साध्या-दिभेदनियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकि-ञ्चित्करत्वादिति प्राहुः । स्यादेतत् शब्दो ऽनित्यः शब्दत्वादित्यत्रासाधारणेऽव्याप्तिः सर्वसाध्य-वद्व्यावृत्तेस्तत्रासत्त्वात् एवं शब्दो ऽनित्यः कृतकत्वादित्यस्य सत्प्रतिपक्षे नित्यत्वव्या-प्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ताविरहा-दित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते दशा-विशेष इति, हेत्वोः सद्धेत्वोः असाधारणः पक्ष-मात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो-यस्य स तथा तयोर्दशाविशेषे हेतौ सर्वसा-ध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्य-वत्त्वस्य च भ्रमदशायामाभासत्वात् अनुमि-त्यजनकत्वात्तद्बुद्धेर्हेत्वादौ साध्यवद्व्यावृत्त-त्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वम् असत्त्वात् अन्यथा बाध-भ्रमेणानुमित्यनुदयात्तस्यापि दोषत्वं स्यात्

कोहि साध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः निर्युक्तिकस्तु प्रवादो न श्रद्धेयः । यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वं च लक्षणार्थः । तच्च द्विविधं विषयरूपं साधारण्यादि बाधे च प्रमितसाध्याभाववान् पक्षः तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात् अविषयरूपं च विरोधिसामग्रीकालीनत्वादिकं तद्वत्त्वं च ज्ञानस्येव तद्विषयस्य हेतोरपीति तन्न तद्वत्त्वं हि हेतोर्नाभेदेन बाधे तदभावात्, अतएव नाश्रयतया वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च, साध्याभाववत्पक्षस्येव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च यथा कथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरि-

व दाहस्य। अथ यद्धर्मविशिष्टज्ञाने सत्यवश्य-
मनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकता-
वच्छेदकमुक्तं भवति च प्रतिबन्धकीभूत-
विरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे
तथेति चेन्न वै कालादिसाधारणकारण-
घटिता सामग्री क्वापि प्रतिबन्धिका विशे-
षतः तत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात्
किन्तु विरोधिपरामर्शस्तथा यदि च तत्सत्त्वे-
पि तत्साध्ये बाधावताराननानुमितिप्रतिबन्धः
प्रामाणिकस्तदाऽप्रामाण्यग्रहाभावस्यैव तदभा-
ऽवस्यापि वैशिष्ट्यं तत्र निवेश्यतां यथा च
भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानु
मितिस्तथा तथाविधबाधादिग्रहेऽपीत्यतिप्रस-
ङ्गः न चातीतादौ लिङ्गे विरोधिपरामर्शका-
लीनत्वमपि यदपि यद्विषयत्वेन ज्ञानस्यानुमिति-
प्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यं सत्प्रतिपक्षे च
विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वमपि हे-
तोस्तज्ज्ञानरूपसम्बन्धेन तस्य समूहालम्बन-
रूपतया हेतुद्वयविषयकत्वादिति तदपि तुच्छम्

साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञान-
प्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं
तस्य च साध्यवत्यपि पक्षे सम्भवादति-
व्याप्तेः विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टं
च तत्राप्रसिद्धमिति चेत्तर्हि किं सर्वत्र सत्प्र-
तिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः
यथाकथञ्चित्सम्बन्धेन तद्वत्त्वं चातिप्रसक्तम्
धूमादेरपि ज्ञानरूपेण तदाश्रयाश्रयत्वादिना
वा सम्बन्धेन व्यभिचारादिमत्त्वात् यादृश-
सम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं
तेन तद्वत्त्वं च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति
च क्वचित्स दुष्टहेताविति कृतं पल्लवितेन । यद्यपीति
स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये
स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् न चैवं नर-
शिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्या-
गमप्रतिरोधः स्यात्तत्रानुकूलतर्काभावेन बल-
वत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुमिते-
श्चानुत्पत्तेरिति भावः । यद्वेत्याद्यभ्युच्चयमात्रं
प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्राति-

बन्धकत्वेपि शाब्दं प्रति प्रतिबन्धकत्वात् योग्यताज्ञानेनान्यथासिद्धत्वात् तदऽभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति सामान्यनिरुक्तिदीधितिः

समाप्तः ।



॥ श्रीगणेशायनमः ॥



॥ अथ ॥

# जागदीशीसामान्यनिरुक्तिः

परिकरः-सहकारी, स च व्याप्तिपक्षधर्मतादिः तत्प्रसङ्गादिति, तेन हेतुना विरोधादिसम्बन्धेन स्मारितस्योपेक्षाऽनर्हत्वादित्यर्थः। तत्त्वनिर्णयादीत्यादिना विजयादेः परिग्रहः। तत्कार्य्येति सद्धेतुकार्य्येत्यर्थः। स्वहेतोस्सद्धेतुत्वव्यवस्थयेव प्रतिवादिहेतोराभासत्वव्यवस्थापनयापि तत्त्वनिर्णयाद्युत्पत्तेस्तथा चैककार्य्यकारित्वमपि सङ्गतिः सम्भवतीति भावः। ननु निरुक्तयथार्थज्ञानस्य विषयतामात्रं समूहालम्बनविषयतामादायोदासीनेऽति प्रसक्तमतो यथार्थज्ञाननिष्ठस्यानुमितिकारणीभूताभावप्रतियोगित्वस्य विषय विधया वच्छेदक त्व मेवार्थो वाच्यः सच ह्रदो वह्निमान् धूमादित्यादौ बाधितहेतावव्याप्तइत्यत आह यथाश्रुतेति ज्ञाननिष्ठानुमितिप्रातिबन्धकतावच्छेदको योबाधाद्यात्मको दोषो येनकेनापि सम्बन्धेन तद्वत्त्वमिति वक्ष्यमाणमिश्रोक्तविवक्षादरे तु दुष्टलक्षणमपि संभवतीत्यभिप्रायेणोक्तं यथाश्रुतमिति तथा च दुष्टहेतोरलक्ष्यत्वात्तत्राऽव्याप्तिर्न क्षतिकरीति भावः। नन्वेवंदुष्टहेतूनां प्रागनुपक्रान्तत्वात्तेच पञ्चेत्यग्रिममूलेन तेषां विभागोऽसङ्गत इत्यत आह तद्वत्त्वं चेति तादृशविषयवत्त्वं चेति दुष्टहेतूनामित्यस्य

लक्षणमिति पूर्वेणान्वयः, तथाचानुमितिकारणीभूताभावप्रति-योगियथार्थज्ञानस्य विषयो यत्रेति व्युत्पत्त्या दुष्टहेतोर्लक्षणम-वगत्यैव तेषामग्रे विभाग इति भावः। तदभिप्रायेणैवेति दोषलक्ष-णाभिप्रायेणैवेत्यर्थः, अन्यथा दुष्टहेतूनां लक्ष्यत्वे विरुद्धादि हेतो-र्व्यभिचारित्वनियमात् पृथग् विभागो न स्यान्मिथो व्यावर्त्तका-नां धर्माणामेव विभाजकत्वादिति भावः। ननु व्यभिचारादीनां ज्ञानस्यानुमित्यप्रतिबन्धकत्वात्तत्राव्याप्तिरत आह तत्रेत्यादि, अनुमितिपदमनुमितितत्कारणपरमित्यन्वयः अनुमितिपदेनानु-मितित्वादिप्रत्येकरूपेणोभयबोधने युगपद्वृत्तिद्वयविरोध इत्यत आह अनुमितीति, अनुमितिनिष्ठकार्यताया यन्निरूपकं तत्सम्ब-न्धित्वे*नेत्यर्थः। तथाचानेनरूपेणाजहत्स्वार्थलक्षणेति भावः। नि-रूपकत्वंचामुकनिष्ठकारणताया इयं कार्येत्यनुभवसाक्षिस्वरू-पसम्बन्धविशेषः तत्सम्बन्धित्वञ्चानुमितितत्कारणयोरुभयोरेव। केचित्तु अनुमितिनिष्ठकार्यतानिरूपकमनुमितिकारणत्वं तत्स-म्बन्धित्वेनेत्यर्थः परामर्शे तदाश्रयत्वस्यानुमितौ तन्निरूपितका-र्यत्वस्य सत्त्वात्। वस्तुतस्तु अनुमितिनिष्ठकार्यतानिरूपके-त्यत्र बहुव्रीहितोऽनुमितिनिष्ठकार्यतानिरूपितसम्बन्धवत्त्वला-भादाश्रयत्वे प्रतियोगित्वे च निरूपकत्वस्यासत्त्वेपि न क्षतिः निरूपितत्वस्यैव तत्र सत्वादित्याहुः॥ अत्रानुमितिपदस्य लाक्ष-णिकत्वापातादाचार्यैर्थमनुमितिमात्रस्यैव लिङ्गोपधानपक्षमनु-सृत्य मूलं व्याचष्टे साध्यव्याप्येत्यादिना मणिकारमताभिप्रा-

---

* अत्र सम्बन्धित्वं ज्ञानत्वेन विशेषणीयं तेन यत्पक्षसाध्यकस्थलेनुमि-त्साकालीनैवानुमितिः तत्रानुमित्सैवपक्षता तत्रानुमित्साप्रतिबन्धक सिद्धिविषये साध्यवत्पक्षेनातिव्याप्तिः।

यैणेव तद्व्याख्यायान्तु सर्वत्र भ्रमानुमितौमानाभावेन यत्रोक्तरीत्या विशिष्टानुमितिः कदापि नोत्पन्ना तत्रत्यदोषेष्वव्याप्तिप्रसङ्गादत एव पक्षःसाध्यवान् साध्यव्याप्यवांश्चेति समूहालम्बनानुमितिर्नोपात्ता । लिङ्गोपधानमते सर्वत्र तादृशानुमितेरावश्यकत्वेन नाव्याप्तिस्तदवस्था ॥ नच ह्रदोवन्हिमान् घटत्वादित्यादौ वह्न्यभाववद्धृदे ऽतिव्याप्तिः घटत्ववति वह्न्यभाववत्तानिश्चयस्यापि घटत्ववद्धृदो वह्निमानित्यनुमितिविरोधित्वादिति वाच्यं साधनवन्निष्ठसाध्याभावस्य व्यभिचारत्वेन मणिकारमते तस्य लक्ष्यत्वादिति ध्येयम् ॥ व्यभिचारादिति व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपीत्यग्रेणान्वयः ॥ ननु* तद्धेतुकानुमितिं प्रति तद्धेतौ व्यभिचारज्ञानाभावस्य हेतुत्वं वाच्यमतो न व्यभिचार इत्यत आह व्याप्त्यादीति । यद्वा कारणताघटकनियमांशस्य व्यतिरेकं प्रदर्श्यानन्यथासिद्धत्वाभावमाह व्याप्त्यादीति, न क्षतिः न व्यभिचारादावव्याप्तिः। पर्वतो निर्वह्निरित्यादिभ्रमादिति योजना धूमो वह्नेर्व्यभिचारीत्यन्वयः यथार्थेतीति । नच पर्वतो निर्वह्निरित्यादिज्ञानस्याप्यंशतो यथार्थत्वात् तद्विषयेऽतिव्याप्तितादवस्थ्यमिति वाच्यं यथार्थपदेन भ्रमसामान्यभिन्नत्वस्य विवक्षितत्वादिति भावः साध्यादिघटितव्यभिचारस्य हेत्वाभासपदवाच्यत्वे साध्यादेरपि तत्त्वमिष्टमेवेत्यत:प्रत्येकमित्युक्तम् ॥ ननु यादृश-

*प्रकृतपक्षविशेष्यकसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनिर्णयं विशिष्टान्यप्रकृतपक्षसाध्यकानुमितित्व व्यापकप्रतिबध्यताघटितलक्षणस्याविवक्षितत्वान्नस्वरूपासिद्ध्यादा वव्याप्तिः । वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वाव्यवहितोत्तरत्वोभयसम्बन्धे नाति विभाव्यम् ।

विशिष्टविषयकत्वेनानुमितिप्रतिबन्धकत्वं यथार्थज्ञानविषयीभूतं तादृशविशिष्टत्वंविवक्षितमतः साध्यादौ नातिव्याप्तिरित्याशयेन शङ्कते अथेति। तद्घटकंचेति व्यभिचारादिघटकीभूतसाध्यादिकं चेत्यर्थः न विशिष्टं न प्रतिबन्धकतावच्छेदकीभूतविशिष्टस्वरूपमित्यर्थः। अप्रसिद्धत्वादिति भ्रमविषयखण्डशः पदार्थविषयकत्वस्य विवक्षणीयप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात्। यथार्थपदं प्रकारान्तरेण सार्थकं कुर्वतां मिश्राणां मतमाह केचित्विति। नन्वेवं बाधितेऽव्याप्तिरित्यत आह-तत्रेति। ननु एतावतैव कथं यथार्थपदसार्थकयमत आह-तृतीयमिवेति। ज्ञायमानं सदित्यादिकमिवेत्यर्थः ज्ञायमानव्यभिचारादेरिति साधनधर्मिकज्ञानीयप्रकारत्वविशिष्टसाध्याभाववद्वृत्तित्वादेरित्यर्थः। यद्यपि अनुमितिकारणीभूताभावप्रतियोगि यत्रेति व्युत्पत्त्याऽनुमितिकारणीभूताभावप्रतियोगिज्ञानप्रकारीभूतव्यभिचारादेर्लाभसम्भवात् ज्ञायमानस्य व्यभिचारादेः प्रतिबन्धत्वाभ्युपगमो न युक्तस्तथापि व्यधिकरणबहुव्रीहेः प्रयोगानुसारितया सर्वत्राव्युत्पन्नत्वादिदमुक्तम्। नन्वेतावता कथमव्याप्तिनिरास इत्यत आह तदर्थश्चेति प्रथमलक्षणार्थश्चेत्यर्थः तादृशाभावेति। अनुमितिकारणीभूताभावेत्यर्थः व्यभिचारादय इति फलितार्थकथनंताद्रूप्येणाप्रवेशात् तत्प्रकारकेति, वाच्यम्। प्रमेयत्वादित्यादि सद्धेतोरनुमितिविरोधिनः साध्यासामानाधिकरण्यस्य भ्रमविशेष्यतामादायप्रमेयत्वादि सद्धेतावतिव्याप्तिवारणाय यथार्थपदम्। नचैवमपि निर्वह्निवृत्तित्वादेः कालिकादिसम्बन्धेन यथार्थज्ञानमादाय सद्धेतावतिव्याप्तितादवस्थ्यम् यादृशसंबन्धेन ज्ञायमानस्य प्रतिबन्धकत्वं तादृशसम्बन्धेन तत्प्रकारकयथार्थ

ज्ञानस्योक्तत्वात् । नच ह्रदो धूमत्ववान्धूमादित्यत्र बाधित-
हेतावव्याप्तिः पक्षे धूमत्वाभाव स्वरूपबाधस्यधूमहेतौ स्वरुप-
सम्बन्धेन यथार्थज्ञानासंभवादिति वाच्यम् । साधननिष्ठव्यभि-
चारादेर्यथार्थज्ञानमादायैव तत्र लक्षणसंगमादिति भावः ॥ ननु
दुष्टहेतोरेव लक्ष्यत्वे द्वितीयादिनिरुक्तेस्तत्राव्याप्तिर्दोषेति व्या-
प्तिश्चेत्यत आह । अग्रे चेति । लक्षणापत्तेराह । आद्यस्यैव वेति
प्राहुरिति यथार्थपदसार्थक्यमेवात्र प्रकर्षः पक्षवृत्तितया ज्ञाय-
मानस्य वह्न्यभावरुपबाधस्य स्वरुप संबन्धेनैव यद्यथार्थज्ञानं
तद्विषयत्वस्यैव धूमादौ सत्वात् पर्वतो वन्हिमान्धूमादि त्यादाव-
तिव्याप्तिरित्यस्वरसः केचिदित्युक्त्या सूचितः । स्वलिङ्गकानु-
मितिकारणीभूताभाव प्रतियोगियथार्थज्ञानविषयत्वमेवार्थः स-
र्वत्रैव दुष्टहेतावन्ततो नित्यज्ञानविषयतामादायैव लक्षणसंभवात्
तथा चानुमितिप्रतिबन्धकीभूतव्यभिचारादिभ्रमविषयतामादा-
यैव सद्धेतावतिप्रसङ्गवारणाय भ्रमसामान्यभिन्नार्थकं*यथार्थ-
पदमावश्यकमिति युक्तमुत्पश्यामः । लिङ्गपदस्य निष्प्रयोजन-
कत्वादाह लिङ्गमिति, ज्ञानपदप्रयोजनं त्वग्रे वक्ष्यामः ॥ ननु
यत्पदस्याखण्डव्यक्तिवाचकतया ह्रदो वन्हिमान् धूमादित्यादौ
साध्यादिशून्यस्यापि केवलस्य पक्षादेर्दोषत्वं स्यात्तन्निष्ठस्या-

---

* संसर्गविशिष्टाऽन्यप्रकारतावदऽन्यज्ञानत्वमेव यथार्थज्ञानपदेने विवक्षितं संसर्गवैशिष्ट्यं च स्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्वस्वानुयोगिनिष्ठविशेष्यता-निरूपितत्वैतत्त्रितयसम्बन्धेन कालिकसम्बन्धमादाय पर्वतोवह्निमानिति भ्रम-वारणार्थं स्वावच्छिन्नत्वोपादानम् संयोगेन वन्ह्यभाववान् पर्वत इति भ्रमवारणाय स्वप्रतियोगिनिष्ठत्वविशेषणम् संयोगेनघटवान् गुण इति भ्रमवारणार्थं स्वानुयोगि-निष्ठविशेष्यतानिरूपितत्वनिवेशः स्वसंसर्गः नित्यज्ञानावृत्तिविषयिताशून्यज्ञा-नत्वं वा ।

पि बाधनिश्चयविषयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वाद-तोव्याचष्टे याद्दशेति, याद्दशधर्मवन्निष्ठतत्तद्विशिष्टविषयकत्वेने-त्यर्थः। विशिष्टपदस्य फलमाह तेनेति। सद्धेत्वादिनिष्ठ इति। ताद्दशस्य दोषत्वे तेनैव दोषेण हेतोर्दुष्टत्वप्रसञ्जनार्थमुक्तम्। आदिनाऽसद्धेतुपरिग्रहः। नातिप्रसङ्ग इति। साध्याभावनिष्ठायाः साध्यीयत्वविशिष्टाभावविषयताया अनुमितिप्रतिबन्धकताऽ-नवच्छेदकत्वादिति भावः। नन्वेवमप्यसंभवः। ह्रदत्वेन नद्यां वन्ह्यभावत्वेन गुञ्जाद्यभावस्य निश्चये सत्यपि ह्रदोवन्हिमान् इत्याद्यनुमितेरनुत्पत्त्या ह्रदत्वावच्छिन्नविशेष्यताकवन्ह्यभावत्वा-वच्छिन्नप्रकारताकनिश्चयत्वादिनैव ताद्दशानुमितिप्रतिबन्धक-तया वन्ह्यभावविशिष्टह्रदादिविषयकत्वस्य प्रतिबन्धकताव-च्छेदकत्वविरहादित्यत आह। अवच्छेदकत्वमिति। तथा च याद्दशधर्मवन्निष्ठतद्विशिष्टधर्मनिरूपितविषयिताया अनुमितिप्र-तिबन्धकतानतिरिक्तवृत्तित्वं ताद्दशविशिष्टधर्मवान् हेतुदोष इत्यर्थः। ताद्दशधर्मश्च बाधादिस्थले बन्ह्यभावविशिष्ट ह्रदत्वाद-रेवेति भावः। विशिष्टस्यासत्त्वेपीति। वन्ह्याद्यभावविशिष्टह्रदा-देर्विषयितासंबन्धेनासत्त्वेपीत्यर्थः। भ्रमादिति। ह्रदत्वादिरूपेण घटादौ वन्ह्यभावत्वेन गुञ्जाद्यभावस्य भ्रमादित्यर्थः। न क्षतिः। नासंभवः। ताद्दशेति। स्वातिरिक्तं याद्दशमनुमितिप्रतिबन्धक-तानतिरिक्तवृत्तिविषयिताकं ताद्दशाघटितत्वेन निरुक्तविशिष्टं विवेशेषणीयमित्यर्थःसव्यभिचारादेरपि अनुमितिप्रतिबन्धक-तऽनतिरिक्तवृत्ति विषयिताकेन स्वेनैव घटितत्वादसंभवः स्या-दतः स्वातिरिक्तेति, प्रमेयत्वविशिष्टसव्यभिचारादिश्च स्वाति-रिक्तेन सव्यभिचारादिनैव ताद्दशेन घटित इति न तत्रातिप्रसङ्गः

स्थातिरिक्तत्वं च*स्वानवच्छिन्नप्रकारतावच्छेदकत्वम्॥तेन सव्य भिचारस्य प्रमेयत्वविशिष्टसव्यभिचाराभिन्नत्वेऽपि न क्षतिः शुद्ध सव्यभिचारस्य विशिष्टसव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वेनैव तत्रातिप्रसङ्गभङ्गादिति भावः । यद्यप्येवमपि प्रमेयत्वमवृत्तिप्रमेयत्वादित्यत्रावृत्तित्वाभाववद्वृत्तिप्रमेयत्वरूपसव्यभिचारेऽव्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधात्मकेनैव तादृशधर्मान्तरेण घटितत्वात् तथापि यादृशविशिष्टविषयकत्वं यत्पक्षहेतुसाध्यकानुमितिनिरूपितयत्प्रतिबन्धकतानतिरिक्तवृत्ति स्वातिरिक्तेन तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन अघटितम् । तादृशविशिष्टं तत्पक्षहेतुसाध्यकानुमितौ दोष इति विवक्षितमुक्तस्थलीयसव्यभिचारस्य बाधघटितत्वेऽपि व्यभिचारज्ञानत्वावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयिताकेन धर्मान्तरेण अघटितत्वात् न तत्राऽव्याप्तिः, तादृशधर्मान्तरञ्च प्रमेयत्वविशिष्टं स्वयमेव सव्यभिचारादिकं सर्वत्र सुलभम् । न चैवमपि साध्याभावविशिष्टपक्षादिविषयित्वस्यानुमितिप्रतिबन्धकताशून्ये संस्कारादौ सत्त्वादसंभव इति वाच्यम् मूलस्थेन लिङ्गज्ञानस्येत्यत्र निश्चयपरेण ज्ञानपदेन यादृशविशिष्टविषयकनिश्चयत्वं तादृशप्रतिबन्धकताऽनतिरिक्तवृत्ति इत्यर्थलाभेन तन्निरासात् प्रतिबन्धकत्वं वा प्रतिबन्धकतावच्छेदकीभूतविषयि-

* ननु व्यभिचारकालीनघटेऽतिव्याप्तिः तादृशघटत्वानवच्छिन्नप्रकारतावच्छेदकव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य व्यभिचारकालीनघटत्वे सत्त्वादितिचेन्न उभयत्रविषयतानिष्ठावच्छेद्यत्वाभावस्यैव प्रकारतानवच्छेदकत्वपदेन विवक्षणीयतया व्यभिचारत्वावच्छेद्यत्वाभाववद्विषयतावच्छेदकत्वस्यतादृशघटत्वेऽसत्वेनातिप्रसङ्गानवकाशात्

तावत्त्वं वाच्यम् तथाच संस्कारादेरपि*तादृशविषयितावत्त्वादेव ना संभवः संयोगाद्यभावस्य च प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैवा निर्णयो द्रव्ये संयोगाऽनुमितिविरोधी न त्वव्याप्यवृत्तित्वज्ञानाभावविशिष्टसंयोगाभावमात्रस्य निर्णयस्तथा येन वृक्षः संयोगी द्रव्यत्वादित्यादौ संयोगाभावविशिष्टवृक्षादावतिव्याप्तिरिति ध्येयम् । प्रमेयत्वविशिष्टसव्यभिचार इति । अत्र प्रमेयत्वविशिष्टं यत्साध्यव्यभिचारि साधनं तत्रेत्यर्थः कार्यः । ननु प्रमेयत्वविशिष्टं यत्साध्यव्यभिचारित्वं तद्वति साधन इत्यर्थः तादृशस्य लक्ष्यत्वात् साधनधर्मिकप्रमेयत्वविशिष्टसव्यभिचारत्वप्रकारकनिश्चयत्वेनापि व्याप्तिबुद्धौ प्रतिबन्धकत्वात्, अन्यथा प्रमेयत्वविशिष्टव्यभिचारत्वांशे भ्रमत्वग्रहदशायां हेतौ व्याप्तिग्रहानुत्पादप्रसङ्गात् यद्रूपावच्छिन्नवत्तानिश्चयत्वेन विरोधित्वं तदवच्छिन्नाभावगर्भस्यैव भ्रमत्वग्रहस्योत्तेजकत्वात् अतएव गृहादौ घटसामान्याभावे साध्ये गृहस्य घटवत्त्वमिव नीलघटवत्त्वमपि बाधएवेति वदन्ति। नच ह्रदः प्रमेयवान्हिमान्धूमादित्यादौ गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन प्रमेयवान्हित्वावच्छिन्नाभावविशिष्टह्रदाद्यप्रसिद्ध्या बाधादावव्याप्तिरिति वाच्यम् तत्र ह्रदोनिर्वह्निरिति ज्ञानस्यापि प्रतिवन्धकतया निर्वह्नित्वाविशिष्टह्रदादेरेव दोषत्वसंभवात् । वस्तुतो गुरुधर्मस्य प्रति-

* प्रतिबन्धकतावच्छेदकविषयितापदेनविशेष्यताविशिष्टविशेष्यताविवक्षिता वैशिष्ट्यञ्च स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्तावच्छेदकतानिरूपितत्वस्वनिष्ठप्रतिबन्धकतानिरूपितावच्छेदकनिरूपिताभावनिष्ठावच्छेदकतानिरूपितनिरूपितस्वनिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितभेदानिष्ठावच्छेदकतानिरूपितावच्छेदकताश्रयप्रकारतानिरूपितत्वोभयसम्बन्धेनतादृशी विशेष्यताच संशयसाधारणी तिनासम्भवः ।

योगितावच्छेकत्वमत एव लक्षणमन्यथा ह्रदादाहजनकद्रव्य-
वान् द्रव्यत्वादित्यादौ बाधाद्यसंभवापत्तेः, निर्वह्नित्वविशिष्टह्रदादिविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्त-
वृत्तित्वात् दाहजनकद्रव्यत्वाद्यवच्छिन्नाभावाप्रसिद्ध्या तद्विशि-
ष्टह्रदादिविषयित्वस्य चासंभवात्, न च तत्र साध्यनिष्ठपक्षवृत्ति-
त्वाभाव एव बाध इति सांप्रतम्। ह्रदत्वप्रकारकप्रमाविशेष्यो वह्नि-
त्वप्रकारकप्रमाविशेष्यवान् द्रव्यत्वादित्यादौ तस्याप्यसंभवात्
ह्रदावृत्तित्वमपेक्ष्य ह्रदत्वप्रमाविशेष्यावृत्तित्वस्य गुरुतया तद-
वच्छिन्नाभावस्याप्यप्रसिद्धेरिति ध्येयम् । एवं चेति । विशिष्ट-
विवक्षणे चेत्यर्थः पक्षतावच्छेदकादीत्यादिना साध्यहेत्वोः सं-
ग्रहः । असमानाकारकस्यापि ज्ञानस्य प्रतिबंधकतामाह पक्ष-
निष्ठइति, येन केनापीति दोषासमानकालीनस्यापि हेतोरेकज्ञान-
विषयत्वादिसम्बन्धेन तत्संबन्धित्वात् विशिष्टदोषाप्रसिद्ध्यैव
संबन्धसामान्येन तद्धत्वोक्तावपि सद्धेतावतिप्रसङ्गाभावादिति-
भावः। प्रकृतः प्रकृतहेतुतावच्छेदकवत्तया अभिमतः, तेन काञ्चन-
मयधूमत्वादिप्रकारेण हेतुतास्थले हेतुतावच्छेदकाविशिष्टहेतोर-
लीकत्वेपि नाव्याप्तिः । यादृश इति । यद्धर्माविशिष्ट इत्यर्थः एव-
मन्यत्रापि कश्चिदित्यस्वरसः, तद्बीजं तु यादृशधर्मिणि यादृशध-
र्मवत्ताज्ञानं वस्तुगत्याऽनुमितिप्रतिबन्धकमित्युक्तौ पर्वते ह्रदे च
वन्ह्यभाववत्त्वावगाहिसमूहालम्बनमादाय वन्ह्यभावविशिष्टह्र-
दस्यापि पर्वतो वन्हिमान्धूमादित्यादौ दोषत्वापत्तिः यादृशध-
र्मिणि यादृशधर्मवत्तानिश्चयत्वावच्छिन्नानुमितिप्रातिबन्धकत्व-
मित्युक्तौ चासंभवः ह्रदत्वेन घटे धर्मिणि अभावत्वेन भावं
तत्र च वन्हित्वेन गुंजां प्रतियोगिविधयाऽवगाहमानस्यापि ज्ञा-

नस्य ह्रदोवन्हिमानित्यनुमितिप्रतिबन्धकत्वेन ह्रदत्वविशिष्ट-धर्मिकवह्निसामान्याभावत्वाच्छिन्नप्रकारताकनिश्चयत्वादिना प्र-तिबन्धकत्वाबिरहादिति ध्येयम् विशिष्टधूमत्वेनेति । अविच्छि-न्नमूलकत्वादिविशिष्टधूमत्वेनेत्यर्थः।पक्षसाध्यहेतुत्वानामवच्छेद-कप्रवेशार्थमाह पर्वतादेरिति, आदिना वह्निधूमयोरुपग्रहः, कांच-नमयत्वविरह इति । न दोष इति परेणान्वयः । एवमग्रेपि यथा-श्रुतलक्षणं तु काञ्चनमयः पर्वतो वन्हिमानित्यनुमितिप्रतिबिरो-धित्वमादायैव तत्रातिव्याप्तमिति भावः अप्रसिद्धपक्षिकामिव प्र-सिद्धपक्षिकामप्यनुमितिमादायातिव्याप्तिवारणाय पक्षतावच्छे-दकं प्रवेशनीयमित्याशयेनाह ह्रदस्य बन्हिधूमशून्यत्वमिति, तद्ध-र्मावच्छिन्नपक्षकत्वाप्रवेशे ह्रदो वन्हिमानित्याकारकवन्हिसाध्य-कधूमलिङ्गकानुमितेः प्रतिबन्धकतावच्छेदकत्वस्य तत्रापि स-त्त्वेन तत्रातिव्याप्तिरेवेति भावः। अप्रसिद्धसाध्यहेतुकामिव प्रसि-द्धसाध्यहेतुकामप्यनुमितिमादायातिप्रसङ्गवारणाय साध्यहेतुत-योरच्वच्छेदकप्रबेशस्य फलमाह पर्वतस्येति, तद्धर्मावच्छिन्नसा-ध्यहेत्वोरप्रवेशे पर्वतो महानसीयवन्हिमांस्तादृशधूमादित्याद्यनु-मितिमादाय तत्प्रतिबन्धकतावच्छेदकत्वस्य महानसीयबन्ह्यभा-ववत्पर्वते तादृशधूमाभाववत्पर्वते च सत्त्वात्तयोरतिव्याप्तिः स्यादिति भावः । व्याप्यत्वांशेऽप्यनुमितौ हेतुविशेषोऽवश्यं निवे-शनीय इत्याशयेनाह प्रमेयत्वस्येति, अन्यथा बन्हिव्याप्यमेयत्ववा-न्पर्वतो वन्हिमानित्यनुमितिव्यक्तिप्रतिबन्धकतावच्छेदकत्वस्य वन्हिव्यभिचारमेयत्वे सत्त्वात्तत्रातिव्याप्तिः स्यादिति भावः । व्याप्यत्वांशे हेतुतावच्छेदकप्रवेशार्थमाह केवलधूमस्येति व्या-प्यत्वांशेऽप्यनुमितौ साध्यताबच्छेदकप्रबेश आबश्यक इत्याभिप्रे-

त्याह बिशिष्टधूमस्य बेति, अन्यथा पर्बतीयबह्निव्याप्याबिशिष्ट-
धूमबान्पर्वतो बह्निमानित्याकारकानुमितिप्रतिबन्धकतावच्छेदक-
त्वस्य पर्बतीयबह्निव्यभिचारित्वाबिशिष्टधूमे सत्त्वादतिब्याप्तिः
स्यादिति भाव:। तत्सम्बन्धेनेति तेषां पर्बतनिष्ठकाञ्चनमयत्वबिर-
हादीनां यथाकथंचित्सम्बन्धेनेत्यर्थः तत्र पर्बते बह्नेः साध्यत्वे तस्य
बिशिष्टधूमस्य समानधर्मिकज्ञानस्यैब प्रतिबन्धकत्वमते पर्बत-
त्वेन बह्निशून्यपर्बतपक्षिकायाः पर्बतो बह्निमानित्यनुमितेः प्रतिब-
न्धकताबच्छेदके बन्ह्यभावबत्पर्बते तिब्याप्तिबारणार्थं तत्पक्षके-
ति तथा च पर्वतत्वेन वह्निमत्पर्बतपक्षकानुमितिप्रातिबन्धकताव-
च्छेदकत्त्वस्य तत्रासात्त्वान्नातिब्याप्तिः बह्नित्वेन पर्बताबृत्तिबह्नि-
बिषयिकायाः पर्बते बह्निरित्याकारिकायाः पर्बतोबह्निमानित्याका-
रिकाया वाऽनुमितेः प्रतिबन्धकतावच्छेदके पर्बताबृतित्वबिशिष्ट-
बह्नाबतिप्रसङ्गबारणाय तत्साध्यकेति तथा च बन्हित्वेन पर्बती-
यबान्हिसाध्यकानुमितिप्रतिबन्धकताबच्छेकत्वबिरहान्न तत्राति-
प्रसङ्गः । एवं धूमत्वेन पर्बताबृत्तिधूमस्य पक्षधर्मत्वाबगाहिन्या
अनुमितेः प्रतिबन्धकत्वाबच्छेदकपर्बताबृत्तित्त्वबिशिष्टधूमेऽति-
प्रसंगवारणाय तद्धेतुकेति इत्थं च पर्वतत्वेनैव निर्वह्निपर्वतस्य
पक्षत्वे वह्नित्वेनैव पर्वताबृत्तिवन्हेः साध्यत्वे धूमत्वेनैव पर्वता-
बृत्तिधूमस्य हेतुतायां पर्वतो वह्निमान्धूमादित्यत्रापि वन्ह्यभाव-
विशिष्टपर्वतादिकं प्राचां मते हेतुदोष एवेति हृदयम् येन संबधेन
यस्य पर्वतत्वादेः पक्षतावच्छेदकत्वं तेनैव संम्बन्धेन तद्धर्माव-
च्छिन्नत्वलाभाय तत्पक्षकेत्यादौ तत्पदं तेन विषयितया पर्वत-
त्वाद्यवच्छिन्नं यत् ज्ञानादिकं तत्पक्षकानुमितिप्रतिबन्धकतामा-
दाय समवायेन पर्वतत्वाद्यवच्छिन्नस्य पक्षत्वादिस्थले पर्वतत्व-

विशिष्टज्ञाननिष्ठवन्ह्यभाववत्त्वादौ नातिप्रसंग इत्याह इत्यादा-
विति । इत्यादिन्यायस्थलीयहेताविर्त्यर्थः । अत्र च निर्वह्निपर्वतत्वेन
वह्निमत्पर्वतव्यक्तेः पक्षत्वे आश्रयासिद्धिरेव निर्वन्हिपर्वतत्वेन
निर्वह्निपर्वतव्यक्तेः पक्षत्वे बाध एवदोषः पर्वतः पर्वतावृत्तिव
ह्निमानित्यत्र तु बाधः तयोश्च तादृशपक्षसाध्यकानुमित्यप्रसि-
द्धयाऽव्याप्तिः पर्वतो वह्निमान् वह्निव्यभिचारिधर्मादित्यत्र वह्नि-
व्यभिचारित्वाविशिष्टे वह्निव्याप्यत्वावगाह्यनुमित्यप्रसिद्धयाव्य-
भिचारादावव्याप्तिःपर्वतो वह्निमान्पर्वतावृत्तिधर्मादित्यत्र पर्वते
प्रकृतहेतुवैशिष्ट्यावगाह्यनुमित्यप्रसिद्धया स्वरूपासिद्धया दाव-
व्याप्तिरिति द्रष्टव्यं । तादृशानुमितेरिति द्वितीयव्याख्यानुसारे-
णेदं तेन पर्वतो वन्हिमान्वह्निव्यभिचारिधर्मादित्यादावाद्यव्या-
ख्यायामनुमितिप्रसिद्धावपि न क्षतिः वस्तुतः अनाहार्यपरामर्श-
स्यैवानुमितिहेतुत्वात् प्रथमकल्पेपि तत्रानुमितेरप्रसिद्धिः यद्वि-
षयकेति यद्विषयकानिश्चयस्य विरोधिनी यद्वियकनिश्चयत्वा-
भावव्याप्या यद्विषयकनिश्चयावृत्तिरिति यावत् तादृशी या वि-
षयिता तत्प्रतियोगिक इत्यर्थः । एतस्य च द्वयोर्व्यतिरेक इत्यग्रे-
णान्वयः । तदुत्तरमनुमितौ तादृशनिश्चयोत्तरानुमितिसामान्ये
पक्षतावच्छेदकाविशिष्टपक्ष इत्यादि अत्र द्वितीयपक्षपदं पक्षताव-
च्छेदकताघटकसंबन्धेन पक्षतावच्छेदकवैशिष्ट्यस्य लाभाय तेन
ह्रदे वन्ह्यभावनिश्चयोत्तरं कालिकादिसंबन्धेन ह्रदत्वादिविशि-
ष्टकालादौ वह्नेस्तद्व्याप्यधूमवत्त्वस्य चानुमितौ उभयस्य सत्त्वे-
ऽपिन बाधादावसंभवः कथितादिशैवाग्रिमयोः साध्यहेतुपदयोर्व्यावृ-
त्तिरवसेया । तथा च यादृशविशिष्टविषयकानिश्चयोत्तरानुमिति-
सामान्ये यादृशविशिष्टविषयकनिश्चयत्वाभावव्याप्यविषयिता-

प्रतियोगिकःप्रकृतपक्षे प्रकृतसाध्यावगाहित्वप्रकृतपक्षधर्मिकप्रकृ-
तसाध्यव्याप्यहेतुमत्तावगाहित्वोभयव्यतिरेकस्तादृशविशिष्टमेव
प्रकृतपक्षसाध्यन्यायस्थलीयप्रकृतहेतौ दोष*इति फलितार्थः प-
र्वतधर्मिकवन्ह्यभावव्याप्यवत्तावगाहित्ववन्ह्यभावव्याप्यव्याप्य-
धूमवत्वावगाहित्वोभयव्यतिरेकस्य वन्हिविशिष्टपर्वतनिश्चय
त्वाभावव्याप्यं यत्पर्वतधर्मिकवन्ह्यभावव्याप्यवत्तावगाहित्वं
तत्प्रतियोगिकत्वात्पर्वतो वन्ह्यभावव्याप्यवान्धूमादित्यादौ व-
न्हिविशिष्टपर्वतेति व्याप्तिरतस्तद्वारणाय† सामान्यइत्युक्तं तथा
च वह्निविशिष्टपर्वतनिश्चयोत्तरमुत्पन्नायां पर्वतो बन्ह्यभाव-
व्याप्यबान्वन्हयभावव्याप्यव्याप्यधूमवांश्चेत्याकारिकायामेवानु-
मितौ पक्षधर्मिक साध्यावगाहित्वतादृशसाध्यव्याप्यहेतुमत्ता-
वगाहित्वोभयव्यतिरेकस्यासत्त्वान्न तादृशस्थलेवन्हिविशिष्ट-
पर्वतो‡ दोषः । तत्रापि बाधादिसंशयोत्तरोत्पन्नायांकस्याञ्चिद-

---

* उभयाभाववृत्तिरूपवत्त्वंहेत्वाभासत्वम् उभयाभाववृत्तित्वञ्च रूपे स्वाव-
च्छिन्नविषयिताशालिनिश्चयवृत्तितानवच्छेदकधर्मघटितधर्मावच्छिन्नप्रतियोगिता
कत्वस्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकत्वोभयसम्ब
न्धेन स्वरूपं तच्च वक्ष्यतावच्छेदकत्वेनाभिमतवन्ह्यभावविशिष्टहृदत्वादिकम् ।

† अथ पार्वतो वह्निमान् बन्हभावव्याप्यवान्तद्व्याप्यवांश्चेति आहार्य्यनि-
श्चयस्यापि कदाचित्सम्भवादाहार्य्यभेदानाञ्च तत्तद्व्यक्तित्वेनैव निवेशनीयतया
निरुक्ताहार्य्यव्यक्तिभेदस्यानिवेशादेव पर्वते वह्न्यभावव्याप्यवत्त्वावगाहिताया बान्हि-
मत्पर्वतविषयकनिश्चयत्वा भावव्याप्यत्वासम्भवेन पर्वतपक्षकवन्ह्यभावव्याप्यसा-
ध्यकस्थले बन्हिमत्पर्वते तिप्रसङ्गासम्भवात्सामान्यातं व्यर्थमिति चेन्नपर्वतत्वा-
वच्छेदेन वन्हेः साध्यतास्थले पर्वतत्वसामानधिकरण्येन वह्न्याभावव्याप्यवत्पर्वता-
त्मकसत्प्रतिपक्षसंग्रहाय निरुक्ताहार्य्यव्यक्तिभेदनिवेशस्यावश्यकत्वेन निरुक्तस्थले
वन्हिमत्पर्वते अति प्रसङ्गवारकतया तत्सार्थक्यात् ।

‡ ननु असंभववारणायानाहार्य्यस्यैव दोषविषयकनिश्चय-
स्यनिवेशाद् निर्वह्निर्वह्निमान् गृहंच घटवदित्यस्यानाहार्य्यत्वास-

भवेनानाहार्यघटवद्गृहविषयकनिश्चयावृत्तित्वस्य निर्वह्नित्व-
विशिष्टे वन्ह्यवगाहितायां सत्त्वेन तत्प्रतियोगिकनिरुक्ताभावस्य
घटवद्गृहविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन वर्तमानत्वा-
दुक्तातिप्रसङ्गो दुर्वार इति चेन्न यद्विषयकनिश्चयस्येत्यत्र यत्पद-
ग्राह्यदोषविषयितायामेवानाहार्य्यत्वनिवेशात्तच्च इच्छाविशिष्टा-
न्यत्वम् वैशिष्ट्यञ्च स्वप्रयोज्यत्वस्वाव्यवहितोत्तरज्ञानीयत्वो-
भयसम्बन्धेन स्वमिच्छा निर्वह्नौ वह्निज्ञानं जायतामितीच्छावै-
शिष्ट्यं तु निर्वह्नित्वविशिष्टे वह्नित्वावच्छिन्नावगाहितायामेव
तदन्यत्वञ्च घटवद्गृहविषयितायामस्त्येवेति न च तथापि
घटाभाववद्गृहकालीननिर्वह्निर्वह्निमानितिज्ञानीयनिर्वह्निधर्मिक-
वह्नित्वावच्छिन्नावगाहिताया अनाहार्य्यघटवद्गृहाविषयकनिश्च-
यावृत्तित्वेन निरुक्तातिप्रसक्तितादवस्थ्यमितिवाच्यम् अना-
हार्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयवृत्तितानवच्छेदकधर्मा-
वच्छिन्नप्रतियोगिताकत्वस्य निरुक्तोभयाभावे विवक्षितत्वात्
निर्वह्नित्वविशिष्टे वन्ह्यवगाहितात्वस्यानाहार्य्यघटवद्गृहाविष-
यकनिश्चयवृत्तितानवच्छेदकत्वविरहेणातिप्रसङ्गानवकाशादिति
विभावयन्तु तर्ककुशलाः ।

---

नुमितौ पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुमत्त्वावगा-
हित्वोभयोः सत्त्वेन ह्रदो वह्निमान्धूमादित्यादौ सर्वत्रैव बा-
धप्रभृतावसम्भवःस्यादतो यादृशनिश्चयपदम् । यद्विषयकनिश्चय-
स्य पूर्वमित्युक्तौ बाधादिनिश्चयपूर्वोत्पन्नानुमितौ साध्यावगा-
हित्वतद्व्याप्यवत्त्वावगाहित्वोभयोः सत्त्वादसम्भवः स्यादतस्तदु-
त्तरमित्युक्तम् । निश्चयश्चागृहीताप्रामाण्यको निविष्टस्तेन भ्रम-
त्वेन गृह्यमाणस्य बाधादिनिश्चयस्योत्तरमुत्पन्नायामनुमितौ क-
दाचिन्निरुक्तावगाहिताद्वयसत्त्वेऽपि नासम्भवतादवस्थ्यम् । निर्व-
ह्निर्वह्निमान् धूमादित्यादौ घटविशिष्टगृहादावतिव्याप्तिः

तन्निश्चयोत्तरानुमितित्वावच्छेदेनैव निर्वह्निधर्मिकवन्ह्यवगाहित्वविरहेण निरुक्तावगाहिताद्वयव्यतिरेकस्य सत्त्वादतस्तद्वारणाय विशिष्टविषयकनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिक इत्युक्तम् तथा च निर्वह्निर्वह्निमान् वह्निव्याप्यधूमवान् गृहं च घटवदित्यादिसमूहालंबन एव व्यभिचारेण निर्वह्निधर्मिकवन्ह्यवगाहित्वस्य वह्निव्याप्यधूमवत्त्वावगाहित्वस्य वा घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यत्वाभावान्निरुक्तावगाहिताद्वयव्यतिरेकस्य घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिकत्वमेव नास्तीति न तत्र घटविशिष्टगृहादिकं दोषः किन्तु वन्ह्यभावादिविशिष्टो निर्वन्ह्यादिरेव तत्र दोषः न च निर्वह्निधर्मिकवन्ह्यवगाहिज्ञानसामान्य एव यादृशवस्तुनो न भानं तत्रातिव्याप्तितादवस्थ्यम् तादृशवस्तुनि मानाभावात् एतदस्वरसेनैव वदन्तीत्यभिधानाच्च। यादृशविशिष्टविषयकज्ञानत्वाभावव्याप्यविषयिताप्रतियोगिक इत्युक्तावसंभवः पक्षधर्मिकसाध्यसंशयादौ पक्षधर्मिकसाध्यावगाहित्वादेः साध्याभावविशिष्टपक्षज्ञानत्वाद्यभावव्यभिचारित्वादतो निश्चयत्वानुसरणम् । अत्र निश्चयस्तत्तदाहार्यज्ञानभिन्नत्वेन विशेषणीयस्तेनाहार्यस्य साध्याभावादिमत्तया पक्षादिनिश्चयस्य पक्षादिधर्मिकसाध्यादिमत्त्वावगाहित्वेऽपि ह्रदो वन्हिमान् धूमादित्यादौ न बाधप्रभृतावसंभवः । यद्यपि पक्षधर्मिकसाध्यावगाहित्वविशिष्टस्य तादृशसाध्यव्याप्यहेतुमत्तावगाहित्वस्य व्यतिरेकमंतर्भाव्यापि लक्षणं सुवचं तथापि यत्र स्थलविशेषे साध्यतद्व्याप्यहेतुमत्त्वयोः पक्षे समूहालंबनभ्रमोऽप्रसिद्धः तत्रत्यदोषेऽव्याप्तिप्रसंगात् विशिष्टाभावस्यातिरिक्तत्वमते विशेषणाप्रतियोगिकतया सा-

ध्याभावव्याप्यवत्पक्षेऽव्याप्तिप्रसङ्गाच्चेति निरुक्तविशिष्टाभावं परित्यज्य द्वयोरित्यनेनोभयाभावो निवेशितः । न च समवेतं द्रव्यं मूर्तं स्पर्शवत्त्वादित्यत्र सद्धेतौ समवेतत्वविशिष्टद्रव्येऽतिप्रसंगः समवेतत्वतदभावयोर्द्रव्यधर्मिकैकनिश्चयागोचरत्वादिति वाच्यं । द्रव्यत्वावच्छेद्यत्वविशिष्टस्वरूपसम्बन्धेन समवेतत्वस्य पक्षतावच्छेदकत्वे तद्दोषस्येष्टत्वात् । स्वरूपसम्बन्धमात्रेण समवेतत्वस्य पक्षतावच्छेदकत्वप्रवेशे तु तादृशपक्षधर्मिकसाध्यावगाहित्वस्यासमवेतत्वविशिष्टद्रव्यनिश्चयत्वाभावव्याप्यत्वविरहादेव उक्तस्थले समवेतत्वाद्यभावविशिष्टद्रव्यस्य दोषत्वासंभवात् द्रव्यं द्विविधं समवेतमसमवेतं चेत्याकारकस्य द्रव्यत्वसामानाधिकरण्येन समवेतत्वतदभावयोर्निश्चयस्य सर्वानुभवसिद्धत्वादेकधर्मावच्छेदेनैव विरोधिनोरेकनिश्चयाविषयत्वात् । इदं तु बोध्यम् । अत्रापि प्रमेयत्वविशिष्टव्यभिचारादावतिप्रसंगवारणाय तादृशविशिष्टांतराघटितत्वविशेषणं देयमेव तस्य च प्रकृतलक्षणाश्रयीभूतं यत् स्वभिन्नं तदघटितान्यत्वं नार्थः प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ व्यभिचारस्य तादृशस्वभिन्नबाधादिघटितत्वेनाव्याप्त्यापत्तेः किं तु निरुक्तलक्षणाश्रयीभूतं वस्तुगत्या यद्विशिष्टान्तरं हेत्वाभासत्वविशिष्टाद्भिन्नं तदघटितत्वमेव * वस्तुतो † यद्विषयकनिश्चयत्वविरोधियादृश-

---

* न चात्र कल्पे सामान्यपदं व्यर्थं पर्वतपक्षकवन्ह्यभावव्याप्यसाध्यकस्थले वन्हिमत्पर्वतस्य वस्तुगत्या हेत्वाभासत्वविशिष्टाद्भिन्नत्वादेव तत्रातिप्रसङ्गविरहादितिवाच्यम् पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकपर्वतीयवन्ह्यभावहेतुकस्थलीयपर्वतीयवान्हिमत्पर्वतात्मकस्वरूपासिद्धेः वन्हिमत्पर्वतात्मकेन वस्तुतत्या हेत्वाभासत्वविशिष्टाद्भिन्नेन घटितत्वात् तत्राव्याप्तिवारकतया सामान्यपदस्य सार्थक्यात् ।

† ननु विरोधिविषयितामयुक्तत्वनिवेशो व्यर्थः निर्वह्निपक्षक वह्निसा-

ध्यकस्थले घटवद्गृहस्य हेत्वाभासभिन्नेन स्वेनैव घटितत्वात्तत्रातिप्रसंगानवकाशा-
दितिचेन्न निरुक्तस्थलीयवन्ह्यभाववन्निर्वन्हिरूपबाधस्य वन्ह्यभावात्मकविशिष्टान्त-
रेण घटितत्वात् तत्राव्याप्त्यापत्तेः वन्ह्यभाावविषयकानिश्चयोत्तरानुमितित्वावच्छेदेन
निर्वह्नित्वविशिष्टे वन्ह्यवगाहितावत्त्वोभयाभावस्य वर्तमानत्वात् तन्निवेशे तु निर्वह्नि-
त्वविशिष्टे वन्ह्यवगाहिताघटितनिरुक्तोभयाभावे नानाहार्यवन्ह्यभावत्वावच्छिन्नावि-
षयकानिश्चयत्व.भावव्याप्यविषयिताप्रतियोगिकत्वम् कदाचिन्निर्वह्निर्निर्वन्हिमान् व-
ह्नि व्याप्यवान वन्ह्यभावश्चेतीतिनिश्चयस्यापि सम्भवात् निर्वह्नौ वह्न्यवगाहिताया भना
हार्यवह्न्यभावविषयकानिश्चयत्वाभावव्याप्यत्वविरहान्नोक्तबाधेऽव्याप्तिः

१ अथ अवृत्तित्वाभाववद्वृत्तिप्रमेयत्वात्मकव्यभिचारस्य वस्तुगत्या हे-
त्वाभासभिन्नेनाभाववद्वृत्तिप्रमेयत्वेन घटितत्वादव्याप्तिरितिचेन्न गृहपक्षकघटसा-
मान्याभावसाध्यकस्थलीयनीलघटवद्गृहस्य बाधत्ववदस्यापि लक्ष्यत्वेन हेत्वा-
भासभिन्नत्वविरहादितिविभावनीयम् ।

(१) अत्र कल्पे यद्विषयकानिश्चये तदन्ययद्विषयकनिश्चये च पक्षधर्मिक-
प्रकृतसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्वानिश्चयान्यत्वासाधारण्यविषयकत्वो-
भयाभाववत्त्वं निवेश्यम् तेन साध्यव्यापकीभूताभावप्रतियोगिहेतुमान् पक्ष इति
निश्चयमादायैव साध्यव्यापकीभूताभावप्रतियोगिरूपासाधारण्ये लक्षणसमन्वया-
न्नासाधारण्याव्याप्तिरिति विभावयन्तु तर्कनिपुणाः ।

---

विषयिताप्रतियोगिको निरुक्तोभयव्यतिरेकस्तदन्ययद्विषयकनि-
श्चयत्वविरोधिताहशविषयिताप्रतियोगिकस्तथाविधविशिष्टा-
घटितत्वमेव तादृशविशिष्टान्तराघटितत्वमित्यस्यार्थो बोध्य इति
न निरुक्ताव्याप्त्याद्यवकाशः। यदि च नव्यानां मते साध्याभावव-
द्वृत्तित्वरूपाया एव व्याप्तेरनुमित्युपयोगित्वात् तादृशव्याप्तिवि-
शिष्टप्रकृतहेतुमत्त्वावगाहित्वमेव लक्षणे निवेश्यते तदा प्रकृतपक्ष-
तावच्छेदकविशिष्टपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यीय-
तादृशव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य प्रकृतसाध्यीय-
व्यतिरेकव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य च त्रितया-
वच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयत्वविरो-
धिविषयिताप्रतियोगिकस्तद्धर्मावच्छेदेन एव तादृशधर्मविशिष्टः

प्रकृतपक्षतावच्छेदकाविशिष्टपक्षकप्रकृतहेतुसाध्यकन्यायस्थले दो-
षो वक्तव्य इति प्रमेयत्वविशिष्टसाधनत्वावच्छेदेन साध्यव्य-
भिचारनिश्चयस्यापि साधनत्वसामानाधिकरण्येन तथाविध-
व्याप्त्यवगाहित्वसत्त्वात् निरुक्तत्रित्वावच्छिन्नाभावस्य तादृश-
निश्चयत्वविरोधिविषयिताप्रतियोगिकत्वविरहादेव प्रमेयत्ववि-
शिष्टसव्यभिचारादौ नातिप्रसंगः । प्रमेयत्वविशिष्टसव्यभिचा-
रत्वावच्छेदेन साधनवृत्तितानिश्चयस्यापि विरोधिनी न साध-
नधर्मिकसाध्याव्यभिचारित्वावगाहिता नव्यानां मते समानध-
र्मिकस्यैव ज्ञानस्य विरोधित्वादतः साधननिष्ठप्रमेयत्वविशिष्ट-
सव्यभिचारेऽपि नातिप्रसंगः । धूमहेतुना द्रव्यत्वसामानाधि-
करण्येन वन्हेः साध्यतास्थले तु द्रव्यत्वावच्छिन्नं सर्वं द्रव्यं न
वन्ह्यभाववत् किन्तु यत्किञ्चिद्द्रव्यमेवेति न तत्र वन्ह्यभाव-
विशिष्टद्रव्येऽतिप्रसंगः । नचैवं द्रव्यत्वावच्छेदेन धूमहेतुना
वन्हेः साध्यतास्थले भागासिद्ध्यंशतो बाधयोरव्याप्तिः द्रव्यत्वा-
वच्छिन्ने सर्वत्र धूमस्य वन्हेर्वा सामान्याभावस्यासत्त्वादिति
वाच्यम् । निरुक्तत्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्म-
वत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकः तद्धर्मावलीढस्यैव
तादृशधर्मवतः प्रकृतपक्षतावच्छेदकधर्मावच्छेदेन प्रकृतसाध्य-
हेतुकदोषनिरुक्तौ निवेश्यत्वात् न च वन्हित्वावच्छेदेन निर्धूम-
वृत्तित्वासत्त्वाद्द्रव्यं धूमवद्वन्हेरित्यादौ साध्याभाववद्वृत्तित्व-
विशिष्टहेतुस्वरूपव्यभिचारेऽव्याप्तिः साध्याभाववन्निष्ठाधिकर-
णतानवच्छेदकीभूतहेतुतावच्छेदकधर्मवत्त्वस्यैव व्याप्तितया त-
द्विरोधिना हेतुतावच्छेदकधर्मत्वावच्छेदेन तादृशाधिकरण-
तावच्छेदकत्वस्यैव व्यभिचारत्वात् । अन्यथा द्रव्यं विशिष्टस-

त्वादिस्थादेरपि व्यभिचारित्वापत्तेरिति परैरपरिशीलितः पन्थाः। गुरुचरणास्तु यद्विषयकेत्यादेर्यादृशविशिष्टविषयकनिश्चयवृत्तित्वविशिष्टाया विरोधिविषयितायाः प्रयुक्तो व्यापकः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वमित्यर्थः। तत्र च विरोधिविषयिताया व्याप्यत्वं न स्वरूपसम्बन्धेन बाधादेराहार्यनिश्चये निरुक्तावगाहिताद्वयसत्त्वेनासंभवापत्तेः किन्तु स्वाश्रयोत्तरानुमितित्वसम्बन्धेन स्वाश्रयोत्तरानाहार्यमानसज्ञानत्वसम्बन्धेन वा तथात्वमेतल्लाभार्थमेव तदुत्तरमनुमितावनाहार्य्यमानसज्ञाने वेत्युक्तं। न च विषयिताया विरोधित्वं यदि प्रतिबन्धकतावच्छेदकत्वं तदा निर्वह्निर्वह्निमानित्यादौ घटाद्यभावविशिष्टभूतलादेरपि दोषत्वापत्तिः तन्निश्चयनिष्ठविषयिताया अपि भूतलं घटवदित्यादिधीप्रतिबन्धकतावच्छेदकत्वात्। एवं पर्वतान्यः पर्वतो दहनान्यदहनवानित्यादौ पर्वतान्यत्वाद्यभावविशिष्टपर्वतादिरुपाश्रयासिद्धाणव्याप्तिः तद्विषयितायाः कुत्रापि बुद्धौ प्रतिबन्धकतानवच्छेदकत्वात् पर्वतः पर्वतान्य इत्याकारकबुद्धेराहार्यत्वेनाप्रतिबध्यत्वादिति वाच्यम्। निरुक्तोभयाभावप्रतियोगिन्यवगाहिता यदंशे यन्निरूपिता तदंशे तदभावनिरूपितविषयिताया एव प्रकृते विरोधिविषयितापदेनोक्तत्वात्। घटाभावविशिष्टभूतलादिविषयितायाश्चातथात्वेन निर्वह्निर्वह्निमानित्यादौ निर्घटत्वविशिष्टभूतलादावतिव्याप्त्यभावादिति प्राहुः। तच्चिन्त्यम्। साध्याभावव्याप्यविशिष्टपक्षात्मकसत्प्रतिपक्षाव्याप्तिप्रसंगात्। एवं कांचनमयपर्वतः काञ्चनमयवह्निमानित्यादौ कांचनमयत्वाद्यभावविशिष्टपर्वतादिरूपाश्रयासिद्धौ

लक्षणसंगमनेऽपि कांचनमयत्वाद्यभावव्याप्यविशिष्टपर्वतादिरूपाश्रयासिद्धावव्याप्तिप्रसंगाच्च। यत्र यो यादृशहेत्वाभासस्तत्र तद्व्याप्यमपि तादृशहेत्वाभासइत्यादिना दीधितिकृता तस्याप्यत्र लक्ष्यतायाः स्वीकर्तव्यत्वात् किंचैवं यद्विषयकानाहार्यनिश्चयनिष्ठविरोधिविषयितायाः स्वरूपसम्बन्धेन निरुक्तोभयाभावव्याप्यत्वं तत्त्वं हेतुदोषत्वमित्यस्यैव सम्यक्त्वे स्वाश्रयोत्तरानुमितित्वादिसम्बन्धेन विरोधिविषयितायाव्याप्यत्वाभिधानमपि संदर्भविरुद्धं स्यात्। एतेन निरुक्तोभयाभावप्रतियोगिन्यवगाहिता यदंशे यन्निरूपिता तदंशे तदभावेन तदभावव्याप्येन वा निरूपितैव विषयिता प्रकृते विरोधिविषयिता वक्तव्या अतो न सत्प्रतिपक्षाद्यव्याप्तिरित्युक्तावपि न निस्तारः पक्षनिष्ठसाध्याभावादेस्तावतापि संग्रहायोगाच्चेति दिक्। यत्तु प्रयुक्तत्वं व्यापकत्वं यद्विषयकनिश्चयनिष्ठविरोधिविषयितायाः उभयाभावव्याप्यत्वं च स्वाश्रयनिश्चयाव्यवहितोत्तरानुमितित्वसंबंधेन तादृशसंबंधलाभायैव तदुत्तरमनुमितावित्युक्तम् एवं च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभाव इति यावत् एवं च निर्वह्निर्वह्निमानित्यादौ दोषादिविषयितायां स्वरूपसंबंधरूपोभयाभावप्रयोजकत्वासंभवेपि तादृशविषयितायां निरुक्तविरोधित्वस्यैव निवेशनीयतया तत्र लक्षणं सुसमन्वयमेव तादृशप्रयोजकत्वस्यानिवेशात्। नचैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव तादृशोभयाभावस्य विरोधिविषयकसमूहालंबनघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकतायाअक्षतत्वादिति वाच्यं। विरोधिविषयितानातिरिक्तवृत्तिर्यद्विषयिता तच्छालिनिश्चयस्य निश्चयान्तेन विवक्षितत्वात्। घ-

टादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्व-
विरहात् । न चैवं विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविष-
यिता तावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यं यत्र पर्वतत्वा-
दिसामानाधिकरण्येन वन्ह्यादेः साध्यता तत्र पर्वतत्वादिसामा-
नाधिकरण्येन वन्ह्यभावादिमत्त्वस्य विषयितायां निरुक्तविरो-
धिविषयिताऽनतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसा-
र्थक्यात्तदुपादाने तादृशवह्न्यभावादिमत्त्वविषयकनिश्चयानन्तरं
पर्वतत्वादिसामानाधिकरण्येन वन्ह्यनुमित्युत्पत्त्या तादृशानुमितौ
तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति । तत्तुच्छं निर्वह्निः
पर्वतो वह्निमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्य-
भावादेः पक्षतावच्छेदकता तत्र पर्वतत्वादिसामानाधिकरण्येन
वन्ह्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वेनाश्रयासिद्ध्यनात्म-
कस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्तिविषयिताकतया
तत्रातिव्याप्तेः । तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूप-
विशिष्टे येन संबन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविशते
तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमि-
तित्वावच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य
विषयितायां निवेशे शेषवैयर्थ्यम् उक्तरीत्या निर्वह्निर्वह्निमानि-
त्यादिस्थलीयदोषे अव्याप्तिश्च(१)। यद्विषयकनिश्चयस्य विरो-
धिनी प्रतिबध्यतावच्छेदिका या विषयिता तत्प्रयुक्तः तद्घटि-
तप्रतियोगिक इत्यर्थस्तु न युक्तः । पर्वतः पर्वतान्यो धूमादि-
त्यादौ पर्वतान्यत्वाभावविशिष्टपर्वताद्यात्मकबाधप्रभृताव्याप्ति-

१ अयं पाठः बहुषु पुस्तकेषु नोपलभ्यते ।

प्रसंगात् पर्वतान्यत्वाभावविशिष्टपर्वतनिश्चयस्य प्रतिबध्यता-
वच्छेदकविषयित्वाप्रसिद्धेः तदुत्तरमनुमितावित्यादिदलस्य व्य-
र्थतापत्तेश्च यद्विषयकनिश्चयप्रतिबध्यतावच्छेदकाविषयिताघ-
टितप्रतियोगिकः पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुम-
त्त्वावगाहित्वोभयव्यतिरेकस्तत्त्वमित्यस्यैव सम्यक्त्वात् । एतेन
यद्विषयकनिश्चयनिष्ठया यद्विरोधिविषयितया प्रयुक्तस्तदुत्तर-
मनुमितौ निरुक्तावगाहित्वद्वयव्यतिरेकस्तत्त्वमेवार्थः प्रयुक्तत्व-
ञ्च काष्ठादौ दाहाद्यभावो मण्यत्वाद्यवच्छिन्नप्रयुक्त इत्यादिप्रतीति
साक्षिकःस्वरूपसम्बन्धविशेषः । स च क्वचिदेव किंचिन्निरूपित-
इति नातिप्रसंगशंकापीति कस्यचित् प्रलपितमप्यपास्तं तादृश-
स्वरूपसंबन्धे मानाभावात् । मणिप्रयुक्तो दाहाभाव इत्यादौ च
मण्यभावजन्यदाहप्रतियोगिकत्वरूपस्यैव मणिप्रयुक्तत्वस्य
दाहाद्यभावे अवगाहनात् अस्तु वा स्वरूपसंबन्धविशेषः प्रयु-
क्तत्वम् अन्यथा इन्धन इव जलेऽपि मणिप्रयुक्तो दाहाभाव इ-
त्यादिप्रतीत्यापत्तेस्तथापि निश्चयपदस्य विरोधिपदस्य तदुत्तरम
नुमितावित्यादिभागस्य च वैयर्थ्यं दुर्वारमेव यद्विषयकनिश्च-
यनिष्ठविषयिताप्रयुक्तः पक्षधर्मिकसाध्यावगाहित्वसाध्यव्या-
प्यहेतुमत्त्वावगाहित्वयोर्व्यतिरेकस्तत्त्वं हेत्वाभासत्वमित्यस्यैव
सम्यक्त्वादित्यास्तां विस्तरः । ननु यादृशदोषव्यक्तीनां निश्च-
यस्योत्तरक्षणे सामग्रीविरहेण कस्यापि वस्तुनोऽनुमितिर्नोत्पन्ना
तादृशव्यक्तिष्वनुमितिगर्भलक्षणस्याव्याप्तिरत आह अनाहार्य-
मानसज्ञाने वेति । तदुत्तरमित्यनुषज्यते तथा च यादृशविशिष्ट-
विषयकनिश्चयोत्तरानाहार्यमानसज्ञानत्वावच्छेदेन तादृशप्रयु-
क्तत्वविशिष्टनिरुक्तावगाहितद्वयव्यतिरेकस्तादृशविशिष्टं हेतु-

दोष इत्यर्थः दोषमात्रस्यैव निश्चयोत्तरमन्ततस्तन्निश्चयस्यैव मानसज्ञानसंभवात् अत्र कल्पे न कुत्राप्यव्याप्तिसंभावनेति भावः । अत्रापि बाधनिश्चयोत्तरमुत्पन्नस्याहार्यमानसज्ञानस्य निरुक्तावगाहिताद्वयसत्त्वादसंभवस्य वारणार्थमनाहार्यपदं मानसपदं त्वव्याप्तिवारणार्थमेव अन्यथा बाधनिश्चयोत्तरमुत्पन्नदोषविशेषादिजन्यानाहार्यज्ञाने निरुक्तावगाहिताद्वयस्य सत्त्वेन क्वचिद्बाधप्रभृतावव्याप्तिप्रसंगात् । न च अहं गौरो ज्ञानित्वादित्यादिस्थलीयबाधे तथाऽप्यव्याप्तिः सत्यपि नाहं गौर इत्यादिबाधनिश्चये तदुत्तरं दोषवशादहं गौर इति पक्षधर्मिकसाध्यवत्त्वावगाहिमानसज्ञानोत्पादादिति वाच्यं मानसपदस्य दोषविशेषाद्यजन्यपरत्वादिति ध्येयम् । ननु काञ्चनमयः पर्वतः तादृशवन्हिमांस्तथाविधधूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षादेरप्रसिद्धत्वादाश्रयासिद्ध्यादावव्याप्तिरत आह पक्षतावच्छेदकवैशिष्ट्यादिकंचेति । वैज्ञानिकं विज्ञानीयविषयतारूपं न तु वास्तवं समवायादिसंबंधरूपमित्यर्थः । गुणीयसंयोगेन पर्वते बन्हेः साध्यत्वे तु तत्संबन्धावच्छिन्नवन्ह्यभावादिकं न हेत्वाभासस्तस्याप्रसिद्धत्वात् किन्तु संयोगे गुणीयत्वाभावः सच हेतुमन्निष्ठाभावीयगुणीयसंयोगावच्छिन्नप्रतियोगितानवच्छेदकवन्हित्वामित्येव व्यापकताज्ञानं प्रति विरोधित्वाद्धेत्वाभासलक्षणाक्रांत इति । अन्वयव्याप्तिमात्रस्य निवेशे व्यतिरेकव्याप्तिग्रहप्रतिबन्धक अनुपसंहारिण्यव्याप्तिरत आह व्याप्तिश्चेति । इत्थं च प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य साध्यान्वयव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वस्य साध्यव्यतिरेकव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य च त्रित्वावच्छिन्नाभाव एव लक्षणघटक इति भावः ।

ननु निर्वन्हिर्बह्निमान् धूमादित्यादौ बाधाद्यव्याप्तिः निर्वन्हिधर्मिक-वन्हिमत्त्वादिज्ञानस्यालीकतया पक्षधर्मिकसाध्यावगाहित्वाप्र-सिद्धिरत आह ताद्दशावगाहितेति । यद्विषयकनिश्चयस्य वि रोधिविषयिताप्रयुक्त इत्यस्य फलमाह एवं चेति । वस्तुमात्रनि-श्चयेति घटाविशिष्टगृहात्मकवस्तुनिश्चयेत्यर्थः । अनन्तरमित्य-त्र अननुमिताविति शेषः । निर्वन्हित्वविशिष्ट इति । निर्वन्हित्व-विशिष्टधर्मिकवन्ह्यवगाहित्वविरहेऽपीत्यर्थः । न क्षतिः न घटादि-विशिष्टगृहादावतिव्याप्तिः । तस्येति । निर्वन्हिधर्मिकवन्ह्यवगा-हित्वस्य विरोध्यविषयकत्वात् घटाविशिष्टगृहाद्यात्मकं यद्व-स्तुमात्रं तन्निश्चयत्वविरोधिविषयितान्यत्वादित्यर्थः । पटानधि-करणमित्यादौ पदमध्यस्थनञापि समुदितार्थस्य प्रतियोगित-याऽन्वयस्य व्युत्पन्नत्वात् । तथा च तत्रत्यस्य निरुक्तावगाहिता-द्वयव्यतिरेकस्य घटाविशिष्टगृहादिनिश्चयत्वविरोधिविषयिताप्र-तियोगिकत्वमेव नास्तीति नातिव्याप्तिरिति भावः।याद्दशविशिष्ट-विषयकत्वं प्रकृतपक्षहेतुसाध्यकानुमितिप्रतिबन्धकतानतिरिक्त-वृत्ति तत्त्वं हेतुदोषत्वमिति प्रागुक्तलक्षणस्य त्यागे अनुशयान्तर-मप्याह एवमिति । उक्तरीत्या विरोधिविषयिताप्रयुक्तत्वस्य नि-वेशन इत्यर्थः । साध्यनिश्चयेत्यस्य पक्षइत्यादिः तस्य साध्यस्य अननुमितावपीति न क्षतिरिति पूर्वेणान्वयः । पक्षधर्मिकसाध्या-वगाहित्वस्य साध्यव्याप्यहेतुमत्त्वावगाहित्वस्य वा साध्यवि-शिष्टपक्षनिश्चयत्वाभावव्याप्यत्वविरहेण ताद्दशावगाहिताद्वय-व्यतिरेकस्य साध्यविशिष्टपक्षनिश्चयत्वविरोधिविषयिताप्राति-तियोगिकत्वविरहादेव प्रकृतलक्षणस्य साध्यविशिष्टपक्षे नाति-व्याप्तिः प्रागुक्तलक्षणस्य तु पक्षधर्मिकसाध्यविधेयकानुमितित्वा-

वच्छिन्नं प्रति प्रतिबंधकत्वमादायैव तत्रातिव्याप्तिरावश्यकीति भावः। यद्यप्यनुमित्साकालीनसाध्यनिश्चयोत्तरानुमितौ निरुक्तावगाहिताद्वयस्य सत्त्वात् यादृशविशिष्टविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्येतावतैव साध्यविशिष्टपक्षस्य वारणं संभवति। तथापि यत्साध्यवत्तया यत्पक्षनिश्चयोत्तरं कदापि तत्साध्यवत्तया तत्पक्षस्य नानुमितिस्तत्साध्यविशिष्टतत्पक्षेऽतिव्याप्तिर्विरोधिविषयिताप्रयुक्तत्वदलेनैव वारयितुं शक्यत इत्याशयेनेदं। अत एव द्वितीयकल्पे यद्विषयकनिश्चयोत्तरानाहार्यमानसज्ञानत्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्यतोऽपि सिद्धसाधनसामान्यवारण संभवतीत्याह मानसेति। साध्यनिश्चयोत्तरमित्यनुषज्यते तेन पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुमत्त्वावगाहित्वयोः साध्यनिश्चयोत्तरमानसज्ञानाविरोधित्वात्तादृशमानसज्ञानेऽपि समावेशादित्यर्थः। तथाच सिद्धसाधनोत्तरमानसत्वावच्छेदेन निरुक्तावगाहिताद्वयस्य व्यतिरेको नास्तीति न कुत्रापि साध्यविशिष्टपक्षेऽतिप्रसङ्ग इति भावः। अत्र वदन्तीत्युक्त्वाऽस्वरसः सूचितस्तद्बीजं तु सर्वत्र सर्ववस्तूनां भ्रमे मानाभावात् यत्र यस्य यद्व्याप्यवत्त्वस्य वा भ्रमो नास्ति तत्र तस्य साध्यतास्थले तदभावविशिष्टतद्वस्तुरूपबाधप्रभृताबव्याप्तिः। निरुक्तावगाहिताद्वयस्याप्रसिद्ध्या तद्व्यतिरेकस्य तत्रालीकत्वात्। किञ्च यत्र संयोगेन पर्वतत्वादेः पक्षतावच्छेदकत्वं यत्र वा पर्वतत्वादिप्रकारेणैव ह्रदादेः पक्षत्वं तत्र पर्वतो वन्हिमान् धूमादित्यादावाश्रयासिद्ध्यादावव्याप्तिः एवं वन्हिमत्पर्वतो निर्वन्हित्वव्याप्यजलत्ववान् निर्जलत्वादित्यादौ च वन्हिविशिष्टपर्वतस्य

हेत्वाभासत्वापत्तेः निरुक्तोभयाभावस्यानाहार्यनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वात् तस्य निश्चयोत्तरानुमितित्वावच्छेदेन वर्तमानत्वाच्च । वस्तुतः पर्वतो वह्निमान् धूमादित्यादौ महानसीयान्यवह्नेर्बाधभ्रमदशायामुत्पद्यमानायां पर्वतो महानसीयवह्निमानित्यनुमितौ विरोधित्वेन पर्वतो महानसीयवन्ह्यभाववानित्याद्यसङ्कीर्णबाधश्चिन्तामणिकृता वक्ष्यत इति तत्राप्युक्तलक्षणाव्याप्तिरिति द्रष्टव्यम् । केषाञ्चिल्लक्षणमाह तादृशपक्ष इत्यादि । प्रकृतपक्षे प्रकृतसाध्यवत्त्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वस्य चावगाहिनो ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानं तत्त्वं हेतुदोषत्वमित्यर्थः । ह्रदो वह्निमान्वह्निव्याप्यधूमवांश्चेत्यादिज्ञानस्य विरोधिविषयकत्वं ह्रदो निर्वह्निरित्येवंविधबाधादिज्ञानस्यास्तीति तत्र लक्षणसमन्वयः । ननु विषयस्य पक्षधर्मिकसाध्यतद्व्याप्यवत्तावगाहिज्ञानविरोधित्वं तादृशज्ञानसमानविषयकज्ञानप्रतिबन्धकग्रहविषयत्वरूपमेवाग्रे वक्ष्यते तथा च तावन्मात्रस्य सम्यक्त्वे यद्विषयकं ज्ञानं तादृशविरोधिविषयकमित्यत्र विषयद्वयादिप्रवेशो गौरवमतस्तथैवाह तादृशज्ञानविरोधित्वं वेति । पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविरोधित्वं वेत्यर्थः । प्रतिबन्धकत्वरूपस्य तादृशज्ञानविरोधित्वस्य सव्यभिचारादावसंभवाद्व्याचष्टे तज्ज्ञानेत्यादि तद्विषयविषयकेति पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकीभूतग्रहविषयत्वमित्यर्थः । तादृशज्ञानप्रतिबन्धकग्रहविषयत्वमात्रोक्तौ निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ बाधाद्यव्याप्तिः तादृशसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानस्याहार्यतया तत्प्रतिबन्धकग्रहाप्रासिद्धेः अतस्ता-

दृशज्ञानविषयविषयकग्रहप्रतिबन्धकत्वं निवेशितं तथा च नि-र्वह्निः पर्वतो वह्निमानित्याकारकज्ञानसमानविषयकस्य पर्वतो वह्निमानिति ज्ञानस्य प्रतिबन्धको यः पर्वतो निर्वह्निरित्याकारक-ग्रहस्तद्विषयत्वमादायैव तत्र लक्षणस्य संगमः । न च वह्निमा-न्वह्निव्याप्यधूमवांश्चायं पर्वतः पटवानित्याकारस्य साध्यत-द्व्याप्यवत्त्वावगाहिज्ञानसमानविषयकग्रहस्य प्रतिबन्धकं पर्व-तो निष्पट इत्याकारकज्ञानमादाय तद्विषयस्य निष्पटत्वविशि-ष्टपर्वतादेर्धूमादिसद्धेतुस्थले दोषत्वापत्तिरिति वाच्यं पक्षध-र्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानत्वाव्यापकाविषयिताशू-न्यग्रहप्रतिबन्धकग्रहविषयत्वस्य विवक्षितत्वात् । उक्तसमूहाल-म्बनस्य च तादृशज्ञानत्वाव्यापकीभूतपटाद्यवगाहित्वात् । एवं विधैवेति आहार्यव्याप्तिज्ञानमुपादाय तत्समानविषयकग्रहविरो-धित्वघटितैव रीतिरुपादेयेत्यर्थः । अन्यथा पर्वतो धूमवान् धूम-व्यभिचारिवह्नेरित्यादौ प्रकृतहेतुकव्याप्तिग्रहविरोधित्वाप्रसिद्ध्या तत्रत्यव्यभिचारादावव्याप्तिप्रसंगादिति भावः । यत्र स्थलवि-शेषे साध्यतद्व्याप्ययोः पक्षे समूहालम्बनभ्रमो न कस्यापि जातः तत्रत्यदोषेऽव्याप्तिः एवं पर्वतःपर्वतान्यो धूमादित्यादौ बाधादाव-व्याप्तिश्चेत्यादिदोषः केचिदित्युक्त्या सूचितः । द्वयोर्बहूनां च निर्धारणे तरतमयोर्विधानादन्यतरत्वाद्युक्तेरसार्वत्रिकत्वादाह तावदन्यान्यत्वमिति । न च गगनवत्प्रमेयो वह्निमान् घटत्वा-दित्यादौ गगनाभावविशिष्टप्रमेयरूपाश्रयासिद्धिमन्तर्भाव्यान्या-न्यत्वं दुर्वचं निर्गगनप्रमेयान्याप्रसिद्धेरिति वाच्यम् । प्रमेयनिष्ठ-स्य गगनाभावस्यैव तत्राश्रयासिद्धित्वेन तमन्तर्भाव्यान्यान्यत्व-स्य सुप्रसिद्धत्वात् । यत्तु वन्ह्यभावविशिष्टह्रदाद्यात्मकबाधप्र-

भूतीनां ताद्रूप्येण दोषाणामपि ह्रदत्वादिमात्रेणादोषत्वाद् यत्र स्थले यादृशयादृशरूपेण दोषव्यवहारः प्रामाणिकस्तत्र तावद्न्यान्यरूपवत्त्वमेव दोषत्वं वाच्यं तथा च गगनाभावविशिष्टप्रमेयस्यापि ताद्रूप्येण दोषत्वमक्षतमेवेति। तन्मन्दम्। यथाकथंचित्संबन्धेन तादृशान्यतमरूपवत्त्वस्यातिप्रसक्तत्वात्। अनुगतानतिप्रसक्तैकसम्बन्धेन तद्वत्त्वस्य च सर्वत्र दोषे वक्तुमशक्यत्वादिति ध्येयं। ननु ह्रदाद्यात्मकपर्वतो वन्हिमान् धूमादित्यत्र आश्रयासिद्धेरेव दोषत्वात्तावदन्यान्यत्वाप्रसिद्धिरत आह एकेति। दोषविभाजकैकरूपमात्रस्थले इत्यर्थः तेन पक्षनिष्ठह्रदान्यत्वस्य ह्रदत्वाभावव्याप्यविशिष्टपक्षस्याश्रयासिद्धित्वादेकव्यक्तिमात्रदोषस्थलाप्रसिद्धावपि न क्षतिः। ननु दोषपक्षकेतरभेदानुमाने बाधत्वादेरेव हेतुत्वसंभवे बाधाद्यन्यतमत्वस्य न हेतुता व्यर्थविशेषणत्वान्नेदं लक्षणमत आह स चेति न वैयर्थ्यं धूमप्रागभाववद्भिन्नधार्मिकत्वादिति भावः। न चैकस्मिन्हेतौ द्वौ त्रयश्चत्वार एव वा दोषा इति तावदन्यान्यत्वमेव लक्षणं वाच्यम्। तथा च तदवान्तरधर्मेण पञ्चधा अग्रे विभागानुपपत्तिः सामान्यतोऽवगतस्यैव विशेषरूपेण विभागस्य संप्रतिपन्नत्वादत आह पञ्चविधेति। तथा च यत्र ह्रदो वह्निमान् घटत्वादित्यादिस्थले व्यभिचारविरोधासिद्धिसत्प्रतिपक्षबाधाःपञ्चैव दोषाःसन्ति तत्र तावदन्यान्यत्वस्यैव दोषलक्षणत्वात्तदवान्तररूपैःपञ्चभिरग्रे विभागस्य न व्याघात इति भावः। ननु विशिष्य दोषानुपादाय तावदन्यान्यत्वस्य लक्षणत्वे सर्वत्र हेतावनुगतलक्षणाभावइत्यत आह व्यभिचारादेरिति। तथा च लक्ष्यस्य अननुगतत्वादत्र लक्षणाननुगमेऽपि न क्षतिरिति भावः। दोषमात्रस्यैव स्वमते

नित्यत्वाद्दशाविशेष इत्यादिग्रन्थस्य सद्धेतौ लक्षणार्थयोजकत्वासम्भवादलक्ष्यताप्रदर्शनाभिप्रायेण तमुत्थापयति स्यादेतदित्यादिना । अव्याप्तिरिति दुष्टलक्षणस्येत्यादि । साधननिष्ठस्य सर्वसाध्यवद्वृत्यावृत्तत्वस्य दोषतया तदप्रसिद्ध्यैव तद्वत्त्वरूपस्य दुष्टहेतुलक्षणस्याव्याप्तिरित्यत आह सर्वेत्यादि । तत्र शब्दत्वे अद्रव्यद्रव्यत्वादावपीति असमवेतद्रव्यत्वादावपीत्यर्थः । शब्दवृत्तित्वविशिष्ट इत्यादि । पक्षवृत्तित्वविशिष्टस्यैव साध्याभावव्याप्यस्य सत्प्रतिपक्षतया केवलस्य तस्यादोषत्वादत आह पक्षस्येति । तद्वत्त्वविरहादिति नित्यत्वव्याप्यासमवेतद्रव्यत्ववत्त्वविरहादित्यर्थः । अलक्ष्यत्वं स्फुटीकर्तुमाह सद्धेत्वोरिति । ननु तयोरदुष्टत्वे कथमसाधारणादिपदेमोल्लेख इत्यतो व्याचष्टे असाधारण इत्यादि । स तथा सत्प्रतिपक्षपदबोध्यः दुष्टत्वरूपस्याभासत्वस्यानंगीकारादन्यथा व्याचष्टे अनुमित्यजनकत्वादिति हेत्वोरेवेत्येवकारः प्रतिबंधकत्वमित्यनन्तरं योज्य इत्याशयेन तादृशैवकारार्थं व्याकरोति परमायातीत्यादिना । असत्त्वात् अप्रसिद्धत्वात् । अन्यथेति । प्रतिबंधकज्ञानविषयीभूतस्य विशिष्टस्यासत्त्वस्थले दोषाभ्युपगम इत्यर्थः । तस्यापि बाधभ्रमविषयस्यापि असाधारण्यादिभ्रमदशायां सद्धेतोरपि प्राचैर्लक्ष्यत्वस्वीकारादुक्तव्याख्यानमसंगतमित्यत आह निर्युक्तिकस्त्विति । सत्प्रतिपक्षासाधारण्यानुपसंहारित्वानामनित्यदोषत्वमंगीकुर्वतां मतमुत्थापयति यत्त्विति । द्वितीयलक्षणमनुसृत्याह तद्वत्त्वमिति यद्विषयत्वेनेत्यत्र विषयशब्दस्य स्वरूपपरत्वाद्यद्रूपेण ज्ञानस्यानुमितिप्रतिबन्धकत्वमित्यर्थलाभादिति भावः । यथार्थपदघटितप्रथमलक्षणमनुसृत्याह तत्प्रकारकेति अनुमितिप्रतिबन्धकतावच्छेद-

कप्रकारकेत्यर्थः मूलस्थप्रतियोगिपदस्य प्रतियोगितावच्छेदकपर-त्वादिति भावः। तथा चानुमितिकारणीभूताभावप्रतियोगितावच्छेदकप्रकारकप्रमाविषयत्वं प्रथमलक्षणार्थं इतिभावः। वस्तुतः प्रकारकत्वाविवक्षणेऽपि यथाश्रुतमूलासङ्गतिः ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमते तेषां ताद्रूप्येणैव साध्याभावज्ञानस्यानुमितिप्रतिबन्धकत्वोपगमादितिभावः। यद्यपि प्रथमलक्षणं व्याख्याय द्वितीयं व्याख्यातुमुचितं तथापि ग्रन्थलाघवार्थं व्यातिक्रमेण व्याख्यातमित्यवधातव्यं। तच्चेति प्रतिबन्धकतावच्छेदकं चेत्यर्थः। विषयरूपमिति। प्रतिबन्धकज्ञानस्येत्यादिः। ननु साध्याभावप्रमैव बाध इति तत्र विषयतया प्रतिबन्धकतावच्छेदकत्वं दुर्घटमित्यत आह बाधे चेति। प्रमितेति प्राचां मतेन तेषां ताद्रूप्येणैव साध्याभावज्ञानस्यानुमितिविरोधित्वोपगमात्। अविषयरूपं चेति। अनुमितिप्रतिबन्धकज्ञानाविषयरूपं चेत्यर्थः विरोधिसामग्रीकालीनत्वेति। साध्याभावानुमितिसामग्रीविशिष्टत्वादित्यर्थः वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन ग्राह्यं तेन पुरुषान्तरीयसाध्याभावानुमितिसामग्रीकालीनस्य धूमपरामर्शस्य स्वहेतुकानुमित्यप्रतिबन्धकत्वेऽपि न क्षतिः आदिपदेनासाधारण्यादिग्रहकालीनत्वोपग्रहः। ननु परामर्शस्य विरोधिसामग्रीकालीनत्वेपि तद्विषयस्य धूमादिहेतोस्तथात्वाभावादित्यव्याप्तिरत आह तद्वत्त्वं चेति। बाध इति प्रायश इत्यादिः तथा च धूमो वह्निमान्धूमादित्यादौ साध्याभावविशिष्टपक्षाभेदस्य हेतौ सत्त्वेपि ह्रदो वह्निमान्धूमादित्यादौ धूमादिहेतौ साध्याभाववत्पक्षाभेदविरहादव्याप्तिरित्यर्थः साध्याभाववद्वृत्तित्वाविशिष्टहेतोरेव व्यभिचारतया तदभेदस्य व्यभिचारिमात्रे संभवाद्वा-

धपर्यन्तानुसरणं। अत एव बाधितहेतावव्याप्तेरेव नाश्रयतयेति तद्धत्त्वमिति पूर्वेणान्वयः। ननु साध्याभाववत्पक्षस्यैव पक्षनिष्ठसाध्याभावस्यापि बाधत्वात्तदाश्रयत्वमादायैव ह्रदो वह्निमान्धूमादित्यादिबाधिते नाऽव्याप्तिरत आह वह्निव्यभिचारीति धूम इति पर्वतादौ वह्नेस्साध्यतास्थले इत्यादिः तेन ह्रदपक्षकवह्निसाध्यकधूमस्य दुष्टतया नेष्टापत्तिसंभवः। ननु वन्ह्यभाववद्वृत्तित्वमात्रस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात्तद्धत्त्वस्य च धूमे विरहात्कुतोऽतिव्याप्तिरत आह साध्याभाववदिति। तथा च वह्निव्यभिचारिद्रव्यत्वमपि विषयतयाऽनुमितिप्रतिबन्धकतावच्छेदकमिति तद्धत्त्वमादायातिप्रसङ्गो युक्त इतिभावः। ननु तत्पक्षकतत्साध्यकतद्धेतुकानुमितिप्रतिबन्धकतावच्छेदकं वक्तव्यं तथा च वह्निव्यभिचारिद्रव्यत्वस्य धूमहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वाभावान्नातिव्याप्तिरत आह साधारण्यादीति। ज्ञानधर्मिकसत्ताभाववद्वृत्तित्वप्रकारकनिश्चयत्वस्य ज्ञानहेतुकसत्तासाध्यकानुमितिप्रतिबन्धकतावच्छेदकत्वात्तदाश्रयत्वमादाय सत्तासाध्यकज्ञानादिहेतावतिव्याप्तिरित्यर्थः। ननु वैशिष्ट्यविषयित्वान्यतरसंबंधेन योऽनुमितिप्रतिबन्धकतावच्छेदको धर्मस्तद्धत्त्वमित्यर्थः विरोधिसामग्रीविशिष्टस्वपरामर्शत्वेन बाधादिविषयकत्वेन चानुमितिप्रतिबंधकत्वात् तथा च साधारण्यादिविषयकत्वस्य तादृशान्यतरसंबंधेन प्रतिबन्धकतानवच्छेदकत्वात्तद्धत्तामादाय नातिव्याप्तिः स्वरूपसंबंधेनैव तस्य तथात्वादत आह यथाकथंचित्तद्धत्त्वस्येति। प्रतिबन्धकतावच्छेदककोटिनिविष्टतामात्रेण यत्प्रतिबन्धकतावच्छेदकं तद्धत्त्वस्येत्यर्थः। अतिप्रसंजकत्वादिति पर्वतो न वन्हिमानित्याकारकज्ञानत्वेन प्रतिबंधकतायां वन्ह्यभा-

वस्यापि प्रविष्टत्वात्तदाश्रयत्वमादाय पर्वतो वन्हिमान्धूमादित्यत्र सद्धेतावतिव्याप्तत्वादिति भावः। ननु वैशिष्ट्यविषयितान्यतरसंबंधेन प्रतिबंधकतावच्छेदकत्वं यत्र पर्याप्तं तादृशधर्मघत्त्वं वाच्यं तथा च विषयितयाऽनुमितिप्रतिबंधकतावच्छेदकत्वस्य साध्याभावमात्रे अपर्याप्तत्वात्तद्धत्त्वमादाय नातिव्याप्तिरत आह विरोधिसामग्रीति। तथा च विरोधिसामग्रीविशिष्टवन्हिपरामर्शत्वेन वन्ह्यनुमितिप्रतिबंधकत्वाभावेन विरोधिसामग्र्याः प्रतिबन्धकतानवच्छेदकत्वात्सत्प्रतिपक्षितसद्धेतावव्याप्तिरितिभावः। उक्ताव्याप्तिं निराकर्तुं प्रतिबन्धकतावच्छेदकपदस्य प्रतिबन्धकपरत्वमाशंकते अथेति। ज्ञाने हेतुज्ञाने तदेवेति तथा च स्वालिंगकप्रकृतपक्षकप्रकृतसाध्यकानुमितिप्रतिबन्धकीभूतधर्मवत्त्वमेव दुष्टहेतुत्वं ज्ञायमानस्य व्यभिचारादेरनुमितिप्रतिबन्धकत्वोपगमाच्च न व्यभिचारिबाधितहेतावव्याप्तिरित्याशयः। सत्प्रतिपक्षिते लक्षणं संगमयति भवति चेति। प्रतिबन्धकीभूतेति स्वलिंगकप्रकृतसाध्यानुमितिप्रतिबन्धकीभूतेत्यर्थः कालीनत्वविशिष्टेत्यत्र कालीनत्वं कालघटितसंबंधेन वैशिष्ट्यलाभार्थं तथा साध्यानुमितिप्रतिबन्धः विरोधिसामग्र्याः प्रतिबंधकत्वे सत्येव तद्धत्तामादाय सत्प्रतिपक्षितस्य संग्रहः स्यात्तदेव त्वसिद्धमित्याह नवै इति अनुमित्यादिकं प्रति प्रत्यक्षसामग्र्याः प्रतिबंधकत्वस्यापि प्रत्यक्षोपधायकतत्तत्सन्निकर्षादिव्यक्तिष्वेव व्यवस्थापितत्वादिति भावः। अनुमित्यादौ कथंचित्प्रत्यक्षादिसामग्रीत्वेन प्रतिबन्धकत्वस्वीकारेऽपि सत्प्रतिपक्षस्थले साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धकत्वं दुर्घटमित्याह विशेषतस्तत्रेति। न सामग्री प्रतिबन्धिकेत्यनुषज्यते। सामग्रीत्वेन प्र-

तिबंधकत्वाभावे हेतुमाह तत्सत्त्व इति । साध्याभावानुमितिसामग्रीसत्त्वे साध्याभावानुमितिरूपकार्योत्पादापत्तेरित्यर्थः । तथा च सत्प्रतिपक्ष एव व्याहन्येतेति भावः । ननु विरोधिसामग्र्याः प्रतिबन्धकत्वानभ्युपगमे सत्प्रतिपक्षस्थले साध्यानुमितेः कथं नोत्पाद इत्यत आह किन्त्विति । तथा साध्यानुमितिप्रतिबन्धकः । ननु सत्यपि विरोधिपरामर्शे पक्षस्य साध्याभावशून्यत्वनिश्चयदशायां साध्यानुमित्युत्पत्त्या तस्य प्रतिबन्धकत्वं दुर्घटमत आह यदि चेति, तत्साध्य इति विरोधिपरामर्शीयसाध्य इत्यर्थः । नानुमितीति न प्रकृतसाध्यानुमितिप्रतिबंधक इत्यर्थः विरोधिसाध्यस्य बाधावतारेण विरोधिपरामर्शस्याप्रामाण्यप्रसंजने तत एव न तस्य साध्यानुमितिप्रतिबंधकत्वम् अन्यथा तु प्रतिबंधकत्वमिष्टमेव नव्यैरित्याशयेन यदि चेत्युक्तं । तदभावस्यापि तादृशबाधनिश्चयाभावस्यापि तत्र विरोधिपरामर्शस्य विरोधितायां निवेश्यतामिति अवच्छेदकत्वेनेत्यादि । नन्वेवं विरोधिसामग्र्या अप्रतिबन्धकत्वेऽपि स्वलिङ्गकानुमितिप्रतिबन्धकीभूतविरोधिपरापर्शवत्तामादायैव सत्प्रतिपक्षिते लक्षणं यास्यतीत्यत आह यथा चेति तथाविधेति भ्रमप्रमासाधारणेत्यर्थः अतिप्रसङ्ग इति । पर्वतो वन्हिमान् धूमादित्यत्र वन्ह्यभावमादाय धूमादावतिप्रसंग इत्यर्थः दूषणान्तरमाह न वातीतादाविति । कालीनत्वमपीति । तथा च भिन्नकालीनयोर्वैशिष्ट्यविरहादतीतसत्प्रतिपक्षितसद्धेतावनुमितिप्रतिबंधकीभूतविरोधिपरामर्शवत्त्वं केनापि सम्बन्धेन नास्तीति तत्राव्याप्तिरिति भावः। स्वसमानकालीनज्ञानविषयत्वादिसम्बन्धेनातीतलिङ्गस्यापि कथंचिद्विरोधिपरामर्शवत्त्वोपगमेऽपि परामृष्टत्वोत्तीर्णतादशायामपि सद्धेतोःकालिका-

दिसम्बन्धेन स्वलिङ्गकानुमितिप्रतिबंधकीभूतविरोधिपरामर्शव-
त्त्वात्तत्रातिव्याप्तिरित्याशयः । सर्वत्र विषयरूपमेव प्रतिबन्धक-
तावच्छेदकं लक्षणे निवेश्यमितिमतं दूषयति यदपीत्यादिना
व्याप्त्यादिकमित्यादिना पक्षधर्मत्वादेःपरिग्रहःतथा प्रतिबं-
धकतावच्छेदकं ननु सत्प्रतिपक्षितसद्धेतौ साध्याभावव्याप्ति-
विरहात्तत्राव्याप्तिरत आह तद्वत्त्वमपीति । तज्ज्ञानेति विरो-
धिव्याप्त्यादिज्ञानेत्यर्थः साध्याभाववदिति पक्षधर्मिकसाध्या-
भाववत्तानिश्चयत्वेनेत्यर्थः प्रमात्वविषयकत्वेनेति प्राचां मतेन
तस्य चेति पक्षधर्मिकसाध्याभाववत्ताज्ञानस्य चेत्यर्थः तथा
च पर्वतो द्रव्यं धूमादित्यत्र पर्वतो न द्रव्यमित्येवं बाधज्ञानसम्ब-
न्धेन द्रव्यत्वाद्यभावस्य धूमे सत्त्वादव्याप्तिरित्यर्थः । ननु यादृ-
शविशिष्टविषयकत्वेनानुमितिप्रतिबन्धकत्वं तद्वत्त्वं वाच्यं तथा च
द्रव्यत्वाभावविशिष्टपर्वताप्रसिद्ध्यैव नोक्तस्थलेऽतिव्याप्तिरित्याशं-
कते विशिष्टेति । तत्र साध्यवत्पक्षस्थले पर्वतो वह्निमान्धूमादि-
त्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिप्रसङ्गाद्विशिष्टविषयकत्वेन
प्रतिबन्धकत्वं निवेशयितुमशक्यमित्याह तत्किमिति । जलं वह्नि-
मद्धूमादित्यादौ सत्प्रतिपक्षिते साध्याभावव्याप्यवत्पक्षस्य प्रसि-
द्धत्वात्सर्वत्रेत्युक्तम्, । ननु पर्वतो द्रव्यं धूमादित्यादौ बाधभ्रमस्य
सम्बन्धत्वे मानाभावान्नातिव्याप्तिः विशेषदर्शिनामपि विरोधि-
परामर्शदशायां धूमादौ सत्प्रतिपक्षितोऽयमिति व्यवहारात्तत्रैव
विरोधिव्याप्त्यादेः ज्ञानस्य सम्बन्धत्वकल्पनादत्र तु बाधि-
तो हेतुरित्यादिव्यवहारविरहादत आह यथाकथंचिदिति । ज्ञान-
रूपेणेति धूमो वह्निव्यभिचारीति ज्ञानरूपेणेत्यर्थः । बाधभ्रमस्ये-
व व्यभिचारभ्रमस्याप्युक्तक्रमेण सम्बन्धत्वे मानाभावादाह तदा-

श्रयेति । व्यभिचाराश्रयीभूतं यद्द्रव्यत्वादिकं तदाश्रयत्वेत्यर्थः आदिना कालिकादेः परिग्रहः । ननु यादृशसम्बन्धेन यत्प्रकारकज्ञानत्वेनानुमितिप्रतिबंधकत्वं तेन सम्बन्धेन तद्वत्त्वस्योक्तत्वान्न धूमेऽतिप्रसक्तिरत आह यादृशेति । न सर्वत्रेति तथा च पर्वतो द्रव्यं धूमादित्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिः प्रतिबंधकज्ञानविषयेण समवायादिसंबंधेन द्रव्यत्वाभावव्याप्यगुणत्वादिमत्त्वस्य धूमे विरहादिति भावः । पर्वतो वन्हिमान्धूमादित्यत्र प्रतिबन्धकधीविषयेण समवायसम्बन्धेन वन्ह्यभावव्याप्यधूमत्वादेः साधने सत्त्वात् सर्वत्रेत्युक्तं । ननु यादृशसंबंधावगाहियत्प्रकारकज्ञानत्वेन प्रतिबन्धकत्वं तादृशज्ञानतादृशसंबंधान्यतरसंसर्गेण तद्वत्त्वं वाच्यमतो नोक्तस्थलेऽव्याप्तिः ज्ञानसंबंधेनैव हेतोरसाध्याभावव्याप्यगुणत्वादिमत्त्वादत आह अस्ति चेति । तेन तद्वत्वं चेत्यनुषज्यते । तथा च पर्वतो वन्हिमान्धूमादित्यत्र बाधबुद्धेः स्वरूपादिसंबंधावगाहितयैव प्रतिबंधकत्वात्तादृशसंबंधेन वन्ह्यभावस्य धूमे सत्त्वादतिव्याप्तिरित्यर्थः । पर्वतो द्रव्यं धूमादित्यत्र द्रव्यत्वाद्यभावस्य स्वरुपसंबंधेन धूमादावभावात्क्वचिदित्युक्तं । मूले यद्यपीत्यादिकं तल्लिङ्गकतत्साध्यकतत्पक्षकानुमितित्वावच्छिन्नं प्रत्येव तादृशव्यभिचारज्ञानत्वादिना स्वतः प्रतिबंधकत्वं तद्घटितलक्षणाभिप्रायेणोक्तमन्यथा व्यभिचारादिज्ञानस्यापि व्याप्त्यादिप्रत्यक्षविरोधित्वाद्बाधसत्प्रतिपक्षमात्रमधिकृत्य शङ्कानुपपत्तेरनुमितितत्कारणपरामर्शान्यतरमात्रं प्रति ज्ञायमानं यत्प्रतिवन्धकं स एव लिंगाभास इत्याशयेन शंकेयमितिध्येयम् । बाधसत्प्रतिपक्षयोः प्रत्यक्षादिप्रतिबंधकत्वे हेतुमाह स्थाणुत्वाभावस्येत्यादिना । एवं शाब्दबोधेपि बाधसत्प्रतिपक्षयोर्विरोधि-

त्वे आतमेति । मलमूत्रपुरीषास्थि निर्गतं ह्यशुचि स्मृतमित्याग-
मस्येत्यर्थः तत्र ग्राण्यंगत्वादिहेतौ अनुकूलतर्कस्य व्याप्तिग्रहे
स्वतोऽनुपयोगादाह वलवत्तरेति । शौचानुमाने साध्यप्रसिद्ध्या-
देरागममात्राधीनतया उपजीव्यजातीयत्वेन मलमूत्रेत्याद्यागमस्य
वलवत्तरत्वं वोध्यम् । अनुत्पत्तेरिति । तथा च प्रतिवन्धकस-
त्वान्नागमविरोध इतिभावः । अभ्युच्चये हेतुमाह प्रत्यक्षं प्रतीति ।
लौकिकप्रत्यक्षं प्रतीत्यर्थः वाधादीत्यादिपदेन ग्राह्यभावव्याप्य-
वत्त्वोपग्रहः शंकते योग्यताज्ञानेति तदभावो वाधानिश्चयाद्यभा-
वः तत्र शाब्दबोधे शब्दं प्रति वाधनिश्चयस्याप्रतिवंधकत्वे
योग्यताज्ञानोत्तरं लौकिकात्मकवाधनिश्चये सत्यापि शाब्दधीः-
स्यादिति दोषं स्फुटतयोपेक्ष्याह एवमपीति । उपनीतभान-
विशेषमिति दोषविशेषजन्योपनीतभानं प्रतीत्यर्थः । तत्त्वेन
वाधनिश्चयाभावत्वेन यद्यपि वाधानिश्चयदशायामुपमितेः
स्मृतेश्चानुत्पादादुपमितिस्मृती प्रत्यापि तदभावस्य हेतुत्वं व-
क्तुमुचितं तथाऽप्युपमितेरतिरिक्तप्रमात्वं विप्रतिपत्तेर्वाधदशा-
यां विशिष्टस्मरणानुत्पादस्य चोद्बोधकाविरहेणापि सम्भवात्तत्र
वाधाद्यभावस्य हेतुत्वे मानाभाव इत्याशयः ॥

इति जागदीश्यां सामान्यनिरुक्तिः समाप्ता ॥

श्रीः ।

# चिन्तामणौ विशेषव्याप्तिः ।



श्रीगणेशायनमः ॥ यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् । यत्समानाधिकरणान्योऽन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा स्वसमानाधिकरणान्योन्याभावाप्रतियोगि यद्वत्कत्वं वा । अन्यवृत्तिवह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्योन्याभावप्रतियोगित्वात् व्यधिकरणवह्निधूमयोर्न व्याप्तिः किन्तु तत्तद्धूमस्य समानाधिकरणतत्तद्वाह्निना । न चैवं धूममात्रे न व्याप्तिरिति वाच्यं सर्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात् । धूमसम्बन्धिवह्निस्तद्व्याप्य एव युगपदुत्पन्नविनष्टयोश्च व्या-

प्तिरेव कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः। यद्वा प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणं कर्मणि च संयोगाभावस्य प्रतियोगिवैयाधिकरण्यावच्छेदकावच्छिन्नत्वमेव । न चान्योन्याभावस्याव्याप्यवृत्तित्वम् अभेदस्याबाधितप्रत्यभिज्ञानात् । व्याप्यव्यापकभावाज्ञानेऽपि वस्तुसतस्तथात्वेनाज्ञायमानस्य सम्बन्धत्वेनैव भातस्य षष्ट्यर्थत्वं न चैवमननुगमो दोषाय कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात् ॥

अथ धूमवति वह्निह्रदौ न स्तः धूमवान्वह्निमद्ध्रदौ न भवतीति प्रतीतेर्व्यासज्यवृत्तिप्रतियोगिकौ वह्निवह्निमतोरत्यन्तान्योन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे इति चेन्न तादृशाभावानभ्युपगमात्। अभ्युपगमे वा तत्र तदुभयं प्रतियोगि न वह्निवह्निमन्तौ।

अथवानौपाधिकत्वं व्याप्तिः । तच्च

यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगि-
तावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिका-
त्यन्ताभावसमानाधिकरणं यत्तेन समं सा-
मानाधिकरण्यम् । न ह्येवं सोपाधिः तत्र
साधनसमानाधिकरणात्यन्ताभावप्रतियोगिन
आर्द्रेन्धनवत्त्वादेरुपाधेर्योऽत्यन्ताभावस्तेन समं
साध्यस्य धूमादेः सामानाधिकरण्याभा-
वादुपाधेः साध्यव्यापकत्वादेतदेवयावत्स्व-
व्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्य-
मनौपाधिकत्वं गीयते । यद्वा यावद्यत्समा-
नाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिका-
त्यन्ताभावासामानाधिकरण्यं यस्य तस्य
तदेवानौपाधिकत्वम् सोपाधौ तु साध्य-
वन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्यो-
त्यन्ताभावस्तेन समं हेतोः सामानाधिक-
रण्यम् उपाधेः साधनाव्यापकत्वात् । यद्वा
यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य
सा व्याप्तिः तथाहि धूमस्य वह्निसम्ब-

न्धित्वे धूमत्वमवच्छेदकं धूममात्रस्य वह्निस-म्बन्धित्वाद्वह्निस्तु धूमसम्बन्धे न वह्नित्वमन-वच्छेदकं धूमासम्बन्धिनि गतत्वात् न ह्यति-प्रसक्तमवच्छेदकं संयोगादौ तथात्वादर्शनात् किन्तु वह्नावार्द्रेन्धनप्रभववह्नित्वं धूमसम्ब-न्धितावच्छेदकं तादृशञ्च व्याप्यमेव ॥

अथवा यत्सामानाधिकरण्यावच्छेदकाव च्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यं वह्निसामाना धिकरण्यं हि धूमे धमत्वेनावच्छिद्यते सोपाधौ तूपाधिना । अत एव साधनतावच्छेदकाभिन्नेन येन साधनताभिमते साध्यसम्बन्धोऽवच्छि-द्यते स एव तत्र साधने विशेषणमुपाधिरि-ति वदन्ति ।

अत एव च साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवं व्य-भिचारिणि साधने एकत्र साध्यतदभावयो-र्विरोधेनावच्छेदकभेदं विना तदुभयसम्ब-न्धाभावादवश्यं साध्यतावच्छेदकमास्ति तदेव

च साधनावच्छिन्नसाध्यव्यापकं साधनाव्यापकं तत्रोपाधिः अत एव व्यभिचारे चावश्यमुपाधिरिति सङ्गच्छते अन्यथा व्यभिचारादेरेव तत्रागमकत्वेन व्यभिचारित्वेन न तदनुमानमप्रयोजकत्वात् । अत एव च तस्य साध्यसम्बन्धितावच्छेदकरूपलक्षणा व्याप्तिः साधनाभिमते चकास्तीति स्फटिके जवाकुसुमवदुपाधिरसावुच्यते लक्षणन्तु साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकत्वं विषमव्याप्तस्तु नोपाधिपदवाच्यः प्रवृत्तिनिमित्ताभावात् दूषकता च तस्य व्यभिचारोन्नायकतया न च व्यभिचारोन्नायकत्वमेवोपाधित्वमप्रयोजकसाध्यव्यापकव्यभिचारिणोरप्युपाधित्वापत्तेरिति ॥

विशेषव्याप्तिः समाप्ता ।

——:o:——

ओंनमो गणेशाय। यद्वेत्यादि। अथात्र नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वादावव्याप्तिः न च तत्र रूपवत्त्वादिकमेव साध्यं तच्च परम्परासम्बन्धेन रूपत्वादिकमेव तेन च सम्बन्धेन न तदभावः क्वापि पृथिव्यादाविति वाच्यम्। रूपादेरसाध्यतापत्तेः द्रव्यान्यत्वादिविशिष्टसत्त्वाद्यभावस्य द्रव्यादिवृत्तित्वात् सत्त्वादिसाध्यकद्रव्यत्वादावव्याप्तिश्चान्यथा विशिष्टतया सत्तादेः साध्यत्वे व्यभिचारिणि जातिमत्त्वादावतिप्रसङ्गात् व्युत्पादयिष्यते च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वं द्वित्वाद्यवच्छिन्नसाध्याभावस्य तत्र सत्त्वाच्च॥

अथाप्रतियोगित्वं प्रतियोगित्वाभावः स च येन रूपेण तद्रूपावच्छिन्नव्याप्यत्वं हेतौ, अस्ति चायं रूपादौ, रूपत्वादिना न पृथिव्यादिनिष्ठाभावप्रतियोगित्वमिति प्रत्ययादिति चेन्न तादृशप्रतीत्या हि रूपत्वादौ प्रतियोगिताया अवच्छेदकत्वाभावो गृह्यते न तु तदभावावच्छेदकत्वं सर्वत्रैव रूपे पृथिवीनिष्ठाभावप्रतियोगित्वं न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् अन्यथा यो यो

धर्म्मो यस्य यस्य नावच्छेदकः तत्तदवच्छेदेन तत्त-
दभावोऽप्युक्तरीत्या सिध्येत्, प्रमेयधूमत्वेन न वह्नि-
मन्निष्ठाभावप्रतियोगित्वमिति प्रत्ययात्तदवच्छेदेन ता-
दृशप्रतियोगित्वाभावस्यापि सुवचत्वाच्च। अथ प्र-
मेयधूमत्वं न गौरवेण सामानाधिकरण्यनिरूपकता-
वच्छेदकं विवक्षितञ्चात्र तथेति चेदसमानाधिकर-
णधूमकव्यक्तिवृत्तितया वह्नित्वमपि न तदवच्छेदकं
कम्बुग्रीवादिमत्त्वादिना च घटादेरसाध्यतापत्तिरिति ब-
हुव्याकोपञ्च एवं प्रमेयधूमत्वं गौरवेण प्रतियोगिताया
इव तच्छून्यताया अपि नाऽवच्छेदकमित्युक्तावपि न
निस्तारः। अत्र वदन्ति। अप्रतियोगित्वं प्रतियोगि-
ताऽनवच्छेदकधर्मवत्त्वं न चैवं पूर्वस्मादभेदस्तत्र
साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्यात्र च
साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्प-
र्यात्। घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वा-
न्योन्याभावात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित्।
अत्यन्ताभावगर्भत्वत्सामान्यविशेषभेदेनान्योन्याभावग-
र्भमपि व्याप्तिद्वयमाह यत्समानाधिकरणेत्यादिलक्षण-
द्वयेन। प्रथमे एकस्य साध्याधिकरणांशस्याधिक्यात्

द्वितीयलक्षणम् । अत्र यद्यपि नानाव्यक्तिसाध्यकस्थले तत्तत्साध्यवतस्तत्तत्साध्यवत्त्वस्य च साधनसमानाधिकरणान्योऽन्याभावप्रतियोगित्वात्तदवच्छेदकत्वाच्चाव्याप्तिः । तथाऽपि यद्रूपावच्छिन्नवत्त्वं तादृशान्योऽन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यमित्यत्र तात्पर्य्यम् । वह्न्यादौ तत्संयोगादौ तद्धदादौ वा साध्ये सर्वत्र साक्षात्परम्परया वाऽनुगमकं वह्नित्वादिकमेव साध्यतावच्छेदकं तदवच्छिन्नवत्त्वस्य च न तादृशान्योऽन्याभावप्रतियोगितावच्छेदकत्वमिति यद्यद्रूपावच्छिन्नं यादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथायथं वक्तव्यं शब्दैक्यस्यानुपादेयत्वात् । अन्येत्यादि । यद्यप्युक्तरीत्या सर्वत्र तादृशप्रतियोगितानवच्छेदकत्वपर्य्यन्तानुधावनस्यावश्यकत्वेनाकिञ्चित्करमेव तादृशाभावप्रतियोगित्वं तथापि विशिष्टसामानाधिकरण्यरूपाया व्याप्तेर्व्यधिकरणासम्भवित्वमात्रे तात्पर्य्यं । व्याप्तिरेवेत्यस्य कालिकीत्यादिः अन्योऽन्याभावगर्भलक्षणस्याव्याप्यवृत्तिसाध्यकसद्धेताव्याप्तिं निरस्यति न चेति, अभेदस्येति तथा

च मूले महीरुहो विहङ्गमसंयोगी नेति प्रतीतेरनुभूयमानविशिष्टभेदोल्लेखिन्या अपि शिखी विनष्ट इति प्रतीतिवद्विशेषणाभावविषयतामात्रं कल्प्यते बाधकबलात् यत्र च विशिष्टभेदे न बाधकं तत्र तथाप्रतीतिबलात्तत्सिद्धिरप्रत्यूहैवेति नातिप्रसङ्गः। अत्र वदन्ति। अभेदस्य भेदाभावस्य ज्ञानं न बाधकं भेदवत्तत्प्रतियोगितावच्छेदकस्य संयोगात्मनस्तदभावस्याव्याप्यवृत्तित्वेन तदुपपत्तेः, यथाहि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञाने तदत्यन्ताभावस्याग्रहादभावव्यवहाराच्च स एव तदभाव इति कल्प्यते तथा प्रतियोगितावच्छेदकधर्म्मग्रहे तद्वदन्योऽन्याभावस्याग्रहादभावव्यवहाराच्च स एव तस्याभाव इति निश्चीयते। आधिक्येऽपि चाव्याप्यवृत्तित्वात्। अत एव न मूलावच्छेदेन कपिसंयोगिभेदाभावज्ञानं तथा असम्भवादसिद्धेश्च, नापि कपिसंयोगिभेदस्य वृक्षावृत्तित्वज्ञानमसिद्धेस्तद्वृत्तित्वस्यैव ग्रहात्। नापि कपिसंयोगिभिन्नभेदज्ञानं कपिसंयोगिभेदवत्तद्भेदस्यापि अव्याप्यवृत्तित्वेनाविरोधात्, नापि मूलावच्छेदेन तज्ज्ञानमसिद्धेः। तद्धर्मवद्भिन्नभेदस्य त-

द्धर्ममात्रपर्य्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोगस्य मूलवृत्तित्वे विरोधात् । न हि घट-भिन्नभेदो घटत्वादतिरिच्यते आवश्यकक्लृप्तघटत्वे-नैवोपपत्तौ अतिरिक्तकल्पनाया मानाभावात् अन्यथा सर्वत्राभावस्याभावोऽतिरिक्त एव कल्प्येत अत एवा-त्यन्ताभावप्रतियोगिनोरन्योऽन्याभावप्रतियोगितावच्छेदकयोश्च सामान्यत एव क्लृप्तो विरोधः तत्र कपिसंयोगवत्यपि वृक्षे मूले न कपिसंयोग इति प्र-तीतेरन्यथानुपपत्त्या तावदाद्ययोःस संकोच्यतां न ह्येषा प्रतीतिः कपिसंयोगिभेदविषयत्वेनोपपादयितुं शक्या नियमतः संयोगवत्त्वेन प्रतियोगिनोऽनुपस्थितेः प्र-तियोगिकोटौ तदनुल्लेखाच्च मूले न कपिसंयोगी-तिप्रतीतेस्तु शिखी विनष्ट इतिवद्भासमानविशे-षणस्याभावमात्रविषयत्वेनोपपन्नत्वान्नान्तिमयोरपीति परास्तम् अन्योऽन्याभावान्तरस्य प्रतियोगिताव-च्छेदकान्तरसमानाधिकरणतया स्वस्वप्रतियोगिता-वच्छेदकासामानाधिकरण्यपर्य्यवसायिनो विरोधस्य स्वत्वघटितत्वेन विशेषत एव विश्रामात् अत्य-न्ताभावप्रतियोगिनोरिवान्योऽन्याभावप्रतियोगिताव-

च्छेदकयोरबाधितसामानाधिकरण्यानुभवेन प्रतिरुद्ध-
तया तथाविधविरोधकल्पनाया अनवकाशाच्च ।
किञ्च शिखी विनष्ट इति प्रतीतेर्विशिष्टध्वंसोल्लेखि-
न्या विशेष्ये तद्बाधादास्तां विशेषणध्वंसविषयता
न संयोगीतिप्रतीतेर्विशिष्टभेदमवगाहमानायाः कथं
विशेषणसंसर्गाभावविषयत्वेनोपपत्तिः । न खलु सह-
स्रेणापि बाधकैरिदं रजतमिति प्रतीतेरङ्गत्वावलम्बनं
व्यवस्थापयितुं शक्यते न च विशेषणभेद एव
तस्या विषयः अग्रेऽपि न कपिसंयोगीति प्रतीत्या-
पत्तेः युज्यते चान्योऽन्याभावोऽप्यव्याप्यवृत्तिः, क-
थमन्यथा पक्वतादशायां घटादावयं न श्यामो
दण्डादिविनाशसमये च चैत्रादौ नायं तद्दण्डवानित्या-
दयो व्यवहाराः, न च तत्र विशेषणसंसर्गाभाव एव
प्रतीयते अनुयोगिनि सप्तमीं विना तदनुपपत्तेः, न
खलु भूतलं न घट इत्यादीनि वाक्यानि कदाचिदपि
घटसंसर्गाभावं बोधयन्ति, तथात्वे वा घटो न घट
इत्यादेरपि प्रसङ्गात् । अपि च विशिष्टवाचकदण्डया-
दिपदेभ्यो धर्म्म्युपसर्जनतयोपस्थितस्य दण्डादेः कथं
प्रतियोगित्वेनाभावेऽन्वयः । इतरविशेषणत्वेनो-

पस्थितस्य निराकाङ्क्षतयाऽन्यत्र विशेषणत्वेनान्वया-
योगात् न चात्र विशिष्टोपस्थापकं पदं विशेषणमात्र-
परं तथाऽपि चैत्रो न दण्डो घटो न श्याम रूपमि-
त्यादावपि दण्डादिसंसर्गाभावप्रतीत्यापत्तेर्दुर्वारत्वात्
एतेन नञोऽभाववल्लाक्षणिकतया विनैव सप्तमीम-
न्वयबोधसमर्थनं प्रत्यूक्तम् । एवञ्च चैत्रो न प-
चतीत्यादौ आख्याताच्छक्त्या लक्षणया वोपस्थि-
तस्य कर्तुरेव भेदो भासत इत्यस्तु, । वस्तुतो न पच-
ति चैत्रो नेदं चैत्रस्येत्यादौ विभक्त्यर्थस्य कृतिसम्ब-
न्धादेरभावान्वयबोधने नञा सप्तमी नापेक्ष्यते अपेक्ष्यते
च प्रातिपदिकार्थस्येति निपुणतरमुपपादयिष्यामः ।
नञो वैधर्म्म्यपरतया न श्याम इत्यादेः श्यामादिविध-
र्म्मेत्यर्थः, वैधर्म्म्यञ्च रक्तत्वादिकमेव यदाहुराचार्य्याः
श्यामाद्रक्तो विधर्मा न तु पृथगित्यपि वदन्तीति कृतं
पल्लवितेन ॥

सम्बन्धत्वेनेति निरूपितत्त्वमेतत् । कस्येति
इत्थञ्चाननुगताया अपि व्याप्तेर्ज्ञानं यथानुमितिहेतु
स्तथा वक्ष्यते । एते अन्योऽन्याभावात्यन्ताभावगर्भे
तादृशेति ॥

ननु किं द्वित्वादिकं प्रतियोगितावच्छेदकमेव न भवति किं वा भवत्येव परन्तु क्लृप्तानामेव स्वसमानाधिकरणतत्तद्धर्म्मावच्छिन्नप्रतियोगिताकानामभावानां लाघवादित्यभिप्रायः । नाद्यः एकैकाभावप्रतीतितो द्वौ न स्त इति प्रतीतेर्विलक्षणत्वात् शब्दादिना द्वौ न स्त इति निश्चयेऽप्येकैकाभावसंशयात् विषयानुगमं विना अनुगताकारप्रत्ययायोगाच्च न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्रं द्वित्वसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वं वा द्वयं नास्तीति प्रतीतेर्विषयः तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहिणि तथा विधोभयशालिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात् द्वित्वसामानाधिकरण्याभानेऽपि प्रतीतेरनुगताकारत्वाच्चात एव न तादृशप्रतीतेर्घटत्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषयत्वम् अन्यतरत्वानुल्लेखेऽपि घटपटौ न स्त इत्यनुगतप्रत्ययाच्च न च परम्परासम्बन्धेन तादृशाद्वित्वसामान्याभाव एव द्वौ न स्त इति प्रतीतेर्विषयः द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्लेखात् द्वित्वादेर्घटादिवृत्तित्वानुपस्थितावपि अ-

न्ततः शब्देनापि घटपटौ न स्त इत्यादिप्रत्ययाच्च अत एवैकविशिष्टापराभावोऽपि न तदालम्बनं विरुद्धयोरपि जलत्वपृथिवीत्वयोर्द्वित्वेनाभावप्रत्ययादित्युक्तत्वाच्च नान्त्यः तथात्वेऽपि साध्यतद्वतोस्तादृशाभावप्रतियोगित्वानपायात् अन्तरेण चाभावान्तरमेकैकघटवति जायमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्यत्वादित्यत आह अभ्युपगमे वेति । उभयत्वमेव प्रतियोगितावच्छेदकं न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः अश्रूयमाणावच्छेदकांशेऽपि लक्षणे तथैव विवक्षितमिति भावः । तच्चेति स्वं साधनत्वाभिमतं तथा च साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्म्मा यद्धर्म्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकास्तद्धर्म्मावलीढसामानाधिकरण्यमित्यर्थः । एतेन सर्वत्र तादृशैर्यावद्भिरवच्छिन्नस्य तादृशावच्छिन्नयावत्प्रतियोगिकस्य चातिप्रसञ्जकात् यावत्त्वावच्छिन्नप्रतियोगिताकादतिरिक्तस्याभावस्याप्रसिद्धिः तादृशावच्छिन्नप्रतियोगिताकानां यावदभावानामधिकरणस्यापि-

प्रायशस्तथा रूपादिसाध्यकपृथिवीत्वादावव्याप्तिश्च क्वापि रूपादिव्यक्तौ तादृशयावदभावसामानाधिकरण्यासम्भवादिति प्रत्युक्तम् । सर्वत्र सोपाधावेकव्यक्तिकस्य सम्भवतोऽप्युपाधेर्धर्म्मान्तराविशिष्टत्वादिना अभावो भवत्येव साध्यसमानाधिकरण इत्यवच्छेदकानुसरणम् । साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्म्मावच्छिन्नसमानाधिकरणास्तद्धर्म्मावलीढसामानाधिकरण्यमित्यर्थः । अभावश्चात्र भावभिन्नो ग्राह्यस्तेनेदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकरूपसामान्याभावत्वावच्छिन्नप्रतियोगिताकाभावानां सकलरूपाणां जलत्वसामानाधिकरण्यविरहेऽपि नाव्याप्तिः । घटध्वंसो ध्वंसत्वादित्यादौ च घटध्वंसत्वादेस्तत्प्रकारकप्रमाविशेष्यत्वादेर्वा भावाभाववृत्तिरतिरिक्तोऽभावस्तादृशो न घटध्वंसत्वादिसमानाधिकरण इति नातिव्याप्तिरित्यपि वदन्ति । यावदिति । स्वं व्यभिचारि येषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्यमित्यर्थः । यावदिति यत्पदं साध्यत्वाभिमतपरं सोपा-

धिवारणाय यावदिति लुप्तसप्तमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् । तथा च साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वमर्थः केवलान्वयिस्थले चाकाशादिरेव तथाविधोऽभावः प्रसिद्ध इति सम्प्रदायः । केचित्तु तादृशयावदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वमर्थः न च तादृशप्रतियोगितानवच्छेदकवन्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थलाभादेव सामञ्जस्येऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यं यावतां तादृशामिन्धनानामेकाधिकरण्यस्याप्रसिद्धेः । न चावच्छेदकांशमपहायाप्रतियोग्येव यावत्त्वेन विशिष्यतां साध्यव्यापकस्यापि रूपान्तरेण साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्योपदर्शितत्वादित्याहुः ॥

साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदके यावति यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वं नास्ति तत्त्वमर्थ इति तु नव्याः ॥

अवच्छिन्नं सामानाधिकरण्यं सामानाधिकरण्यावच्छेदकरूपं वा व्याप्तिः । इत्थं च धूमत्वद्रव्यत्वादेर्व्याप्यतावच्छेदकत्वं दण्डत्वादेर्नियतपूर्ववर्तितावच्छेदकधर्म्मात्मककारणतावच्छेदकत्ववदभेदेऽप्युपहितानुपहितभेदाद्वा समर्थनीयं । तत्राद्यमभिप्रेत्याह यत्सम्बन्धितेति । सा सम्बन्धिता सामानाधिकरण्यरूपा जनकत्वादिव्यावृत्ता । अत्र च विशिष्टसत्तात्वाद्यवच्छिन्नगुणादिसामानाधिकरण्यविशिष्टहेतुमत्तापरामर्शस्तु पक्षे साध्यनिर्णयात्प्रागसम्भवीत्यनुशयेन द्वितीयम् । अयमालोको धूमो वेत्यादौ विशिष्य सन्देहेऽपि सामान्यतोऽवच्छेदकरूपवत्त्वनिर्णयः सम्भवत्येवेति हृदयम् । अत्रावच्छेदकत्वं नान्यूनवृत्तित्वम् अन्यूनानतिरिक्तवृत्तित्वं वा वन्ह्यादौ साध्ये मेयत्वादावतिप्रसङ्गात् धूमत्वादावप्रसङ्गाच्च । किन्त्वनातिरिक्तवृत्तित्वं तच्च यद्यपि न तदभाववदवृत्तित्वं गुणवान् सत्त्वादित्यत्र सत्तात्वेऽतिप्रसङ्गात् । न च कर्मादिवृत्तित्वावच्छेदेन गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्तमानत्वान्न तथा तथा सति विशिष्टसत्तात्वे प्रागुपदर्शितदिशा

च धूमत्वादावव्याप्तिप्रसङ्गात् । तथापि अतिरिक्ते यद्धर्म्मविशिष्टहेत्वधिकरणवृत्तित्वं न वर्त्तते तत्त्वं साध्यासमानाधिकरणावृत्ति स्वविशिष्टाधिकरणवृत्ति-स्वसामान्यकत्वं स्वविशिष्टाधिकरणावृत्ति यावत्सा-ध्यासमानाधिकरणत्वकत्वमिति तु फलितार्थः सत्ता-त्वविशिष्टसत्ताधिकरणकर्म्मादिवृत्तित्वस्य साध्यास-मानाधिकरणे कर्म्मत्वादौ सत्त्वान्नातिप्रसङ्गः कर्म्मा-द्यन्यत्वविशिष्टसत्ताश्रयश्च न कर्म्मादिरिति नाप्र-सङ्गः एवं च मेयत्वादेरपि केवलान्वयिसामाना-धिकरण्यावच्छेदकत्वोपपत्तिः । यत्तु वृत्तिमत्त्वादि-कमेव तत्र व्याप्तिस्तद्ग्रहस्तु मेयत्वादिनेति तन्न । व्याप्तिविरहिवृत्तितया गृह्यमाणेन रूपेण व्याप्तिग्र-हासम्भवात् अन्यथातिप्रसङ्गात् साध्यतावच्छेदक-सम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेनावर्त्त-मानत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेऽपि तेन तेन तथात्वं वाच्यं नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणतादृशधर्मान्तराघटितत्वेन विशे-षणीयं सामानाधिकरण्योपादानाद्धूमप्रागभावत्वादिसं-ग्रहः । तदघटितत्वं च तदविषयकप्रतीतिविषयत्वं,

स्वरूपसम्बन्धविशेष एवावच्छेदकत्वं अत एव न ह्यतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते अन्यथाऽतिप्रसक्तेऽनतिप्रसक्तत्वस्याप्रसक्तत्वेन तन्निराकरणायोगात् विरुद्धयोर्भावाभावयोराधिकरणे एकस्यैकेन सम्बन्धेन वृत्तिर्विरुध्यते अतस्तत्रावच्छेदकभेदापेक्षा अत एव व्यभिचारिणि साध्यतदभावसामानाधिकरण्ययोर्विरुद्धयोरूपपादनायोपाधितदभावावच्छेदकावनुमन्यन्ते न्यायाचार्य्याः सत्तात्वन्तु गुणाद्यभावस्येव गुणस्यापि न सामानाधिकरण्यावच्छेदकं विरोधात् । अव्याप्यवृत्तेश्च कपिसंयोगादेराधिकरणे वृक्षादौ तदभावस्य संयोगेन च वन्हेरधिकरणे महानसादौ समवायावच्छिन्नप्रतियोगिताकतदभावस्य सत्त्वेनाविरुद्धत्वात् वह्निमति च संयोगेन वर्तमानस्य धूमादेर्वन्ह्यभाववति स्वावयवे संयोगेनावर्तमानत्वाच्च तद्वृक्षत्वत्वधूमत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः व्यभिचारधीरप्येतद्व्याप्तिबुद्धौ विरोधिन्येव तद्धर्म्मविशिष्टस्य साध्यानधिकरणवृत्तित्वग्रहे तदवच्छेदेन साध्याधिकरणवृत्तित्वग्रहायोगात् अस्तु वा एतन्मते हेतुवृत्तिधर्म्मस्य साध्यसामानाधिकरण्यान-

वच्छेदकत्वमेव व्यभिचारस्तद्धीरेव साक्षाद्विरोधिनी व्यभिचारान्तरधीस्तु परम्परयेति नीलधूमत्वादिकन्तु गौरवान्नावच्छेदकमेवञ्च लघु घटत्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः न तु तत्सहचरितकम्बुग्रीवादिमत्त्वादिकं तेन गुरुणाऽपि रूपेण व्याप्तिग्रहे कथायां हेतोरुपन्यासे वाऽनुयोगः प्रकारान्तरव्याप्तिवादिनामपि समानः एवं द्रव्यं रूपात् रसादित्यादौ सकलगुणसाधारणस्य गुणत्वस्य द्रव्यत्वादिसाधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वैकस्यावच्छेदकत्वसम्भवे बहूनां रूपत्वादीनां न तत्त्वं विरुद्धधर्म्मद्वयाधिकरणयोश्चैकस्यैकेन सम्बन्धेन वृत्तौ कथं विरोधः कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्टरूपादेः प्रयोगः तथापरामर्शाद्वानुमितिरितिविभावनीयम् ॥

अपरे तु यद्धर्म्मविशिष्टहेत्वधिकरणत्वं साध्याधिकरणताया अवच्छेदकं स धर्म्मो व्याप्तिः ग्रन्थस्तु धूमस्य धूमवतः धूमत्वं धूमवत्त्वं वह्नेस्तु वह्निमतस्त्वित्यादिप्रकारेण व्याख्येयः । अत्रावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः, विरुद्धदिकालावच्छिन्नवृत्ति-

कस्य न्यूनदेशकालवृत्तिकादेश्चाधिकरणतायां तद-सम्भवात्तुल्यवृत्तिकधर्म्मद्वयाधिकरणत्वयोर्मिथोऽव-च्छेद्यावच्छेदकभावस्य च नियन्तुमशक्यत्वात् ना-प्यन्यूनवृत्तित्वं न्यूनवृत्तिकधूमत्वादेरव्याप्यतापत्तेः, किन्त्वनतिरिक्तवृत्तित्वं, स्वान्यूनवृत्तितत्कत्वमिति-यावत् अतो न केवलान्वयिन्यव्याप्तिः । अत्र च यदन्यूनवृत्ति साध्यं तत्त्वं स्वव्यापकसाध्यसम्ब-न्धित्वपर्य्यवसन्नमपेक्ष्य गौरवं परमवशिष्यते तच्च ग्रन्थकार एवाग्रे विवेचयिष्यत इत्याहुः ॥

इति शिरोमणिः समाप्ता ।

——:o:——

श्रीगणेशायनमः ॥ द्रव्यं पृथित्वादित्यादावव्याप्त्यभावादाह नानाव्यक्तीति । जातित्वेन शब्दत्वेन वा नानाव्यक्तेः साध्यतायामव्याप्त्यभावाद्रूपादीत्युक्तं रूपवान् रसादित्यादौ यद्रूपव्यक्तेः प्रतियोगिव्यधिकरणयद्रसवन्निष्ठाभावाप्रतियोगित्वं तद्रूपसामानाधिकरण्यस्य तद्रसव्यक्तौ व्याप्तित्वसम्भवादाह- एकव्यक्तीति रूपवान् तद्रसादित्यादावेकव्यक्तिहेतावव्याप्तिविरहात् पृथिवीत्वादीत्युक्तं । अव्याप्तिरिति रूपमात्रस्यैव चालनीन्यायेन तत्तत्पृथिवीनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगित्वादितिभावः । न चेति वाच्यमित्यन्वयि रूपवत्त्वं रूपाधिकरणत्वं तदप्यधिकरणभेदाद्भिन्नमेवेत्युक्तदोषतादवस्थ्यादाह तच्चेति रूपत्वपृथिवीत्वयोः साक्षात्सामानाधिकरण्याभावात् कथं तयोर्व्याप्तिरत आह परम्परेति । स्वाश्रयाधिकरणत्वरूपपरम्परासम्बन्धेनेत्यर्थः । ननु पृथिवीत्ववति समवायेन रूपत्वस्याभावसत्त्वात् कथं तन्निष्ठाभावाप्रतियोगित्वमत आह तेन चेति । परम्परासम्बन्धेन चेत्यर्थः । तदभावो रूपत्वादेरभावः प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिताश्रयानधिकरणीभूतहेतुमन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाया एव प्रतियोगितायाः लक्षणघटकत्वादितिभावः । असाध्यत्वमनुमित्यविधेयत्वं । ननूक्तव्याप्तिज्ञानाद्रूपत्वादिसाध्यकैवानुमितिः व्याप्त्यन्तरज्ञानादेव रूपादिसाध्यकानुमितेः सम्भवात् स्ववृत्तिरूपत्वावच्छिन्नवत्त्वसम्बन्धेन रूपादेः साध्यतायामुक्तव्याप्तिज्ञानादपि रूपादिसाध्यकानुमित्युत्पादे बाधकाभावाश्चेत्यत आह द्रव्यान्यत्वादीति । अव्याप्तिरिति । व्याप्यवृत्तिसाध्यकस्थले प्रतिवैयधिकरण्यस्यानुपादेयत्वात् (१) तत्रत्यलक्षण-

(१) अथ प्रतियोगिवैयधिकरण्यस्य विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशस्यावश्यकतया कथं व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैय-

ष्याव्याप्तिरित्यर्थः। ननु तत्र हेतुमन्निष्ठाभावस्य प्रतियोगित्वं वैशिष्ट्यानवच्छिन्नं वाच्यमतो नाव्याप्तिरित्यत आह अन्यथेति। ननु विशेष्यवति विशिष्टाभावो विशेषणाभाव एवेति द्रव्यानिष्ठस्य द्रव्यान्यत्वविशिष्टसत्त्वाभावस्य प्रतियोगित्वं द्रव्यान्यत्वादौ विशेषण एव न तु विशेष्ये सत्तायामतो नाव्याप्तिरत आह व्युत्पादयिष्यत इति विशिष्टाभावस्तावदतिरिच्यतां मा वा द्रव्ये तदन्यत्वविशिष्टसत्ता नास्तीतिप्रतीतिबलात् द्रव्यनिष्ठाभावस्य वैशिष्ट्यावच्छिन्नप्रतियोगित्वं पुनः सत्तायामावश्यकं अन्यथा विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यापत्तेरितिभावः॥

केचित्तु ननु विशेषणविशेष्ययोः सम्बन्धाभावपर्य्यवसन्नस्य विशिष्टाभावस्य प्रतियोगित्वं तदुभयोः संवन्ध एव न तु विशेष्य इति नाव्याप्त्यवकाश इत्यत आह अन्यथेति। विशेष्यस्य विशिष्टाभावाप्रतियोगित्वे इत्यर्थः। ननु लक्षणातिप्रसङ्गवारणान्यथानुपपत्तिर्न वस्तुसाधिकेत्यत आह व्युत्पादयिष्यते चेतीत्याहुः। ननु साध्यतावच्छेदकवहिर्भावेन (२)यद्वैशिष्ट्यावच्छिन्नं प्रतियोगित्वं तदन्यत्वेन हेतुमन्निष्ठाभावप्रतियोगित्वं विशेषणीयमतो नोक्ताव्याप्त्यतिव्याप्तीत्यत आह

धिकरण्यस्यानुपादेयत्वादित्युक्तमितिवाच्यं तत्रातिव्याप्तिवारणाय स्वप्रतियोग्यधिकरणत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावस्य हेत्वधिकरणे निवेशादिति ध्येयम्।

(२) ननु साध्यतावच्छेदकबहिर्भावेनेति व्यर्थं विशिष्टसाध्यकव्यभिचारिणि उभयाभावमादायैवातिव्याप्तिविरहादितिचेन्न वैशिष्ट्यस्याननुगततया तत्तद्वैशिष्ट्यनिष्ठावच्छेदकतानिरूपितत्वाभावकूटस्यैव निवेशनीयतया कूटलाघवार्थमेव तदुपादानादितिध्येयम्।

द्धित्वादीति । तथा च सत्तागुणत्वोभयाभावस्य द्रव्ये सत्त्वात्त-मादाय सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिः ॥

(१) यद्यपि साध्यतावच्छेदकाभिन्नो यः साध्यनिष्ठो धर्म-स्तदनवच्छिन्नैव हेतुमन्निष्ठाभावस्य प्रतियोगिता निवेशनीये-त्युक्ताऽव्याप्त्यादिव्युदासः, तथाऽपि प्रमेयवान् वाच्यत्वा-दित्यादावव्याप्त्यापत्तेः । घटत्वाद्यवच्छिन्नाभावस्य तादृशध-र्मावच्छिन्नत्वात् प्रमेयत्वावच्छिन्नाभावस्य चाप्रसिद्धत्वादिति भावः ।

सार्वभौममतमुत्थापयति अथेति । अप्रतियोगित्वं मू-लोक्ताप्रतियोगित्वान्तस्यार्थः प्रतियोगित्वाभावो हेतुमन्निष्ठा-भावप्रतियोगित्वाभावः न तु तादृशप्रतियोग्यन्यत्वं भेदमात्र-स्यैव व्याप्यवृत्तित्वेन तदवच्छेदकस्योक्त्यसम्भवात्(२) नन्वेवं तद्रूपवान् पृथिवीत्वादित्यादावतिव्याप्तिः तद्रूपेऽपि रूपत्वा-द्यवच्छेदेन तादृशप्रतियोगित्वाभावसत्त्वादतो धर्मविशेषम-न्तर्भावयति स चेति । तथा च हेतुमन्निष्ठाभावप्रतियोगि-त्वाभावावच्छेदको यो धर्मस्तदवच्छिन्नसामानाधिकरण्यमेव तद्धर्मावच्छिन्नस्य व्याप्तिरिति भावः । रूपवान्पृथिवीत्वादित्या-दावव्याप्तिमुद्धरति अस्ति चेति । अयं रूपत्वाद्यवच्छेद्यः पृथिवीत्वादिमन्निष्ठाभावप्रतियोगित्वाभावो रूपादावस्तीत्यर्थः । प्रमाणमाह रूपत्वादिनेति । प्रतियोगिताया इति पृथिवीनि-ष्ठाभावप्रतियोगिताया इत्यर्थः । अवच्छेदकत्वाभाव इति प्रा-त्यक्षिकप्रतीत्यभिप्रायेण तथाविधशाब्दस्य तु तादृशप्रति-योगित्वं न रूपत्वावच्छेद्यमित्यर्थो ग्राह्यः तदभावेति तादृशप्रति-योगित्वाभावेत्यर्थः । तथा चोक्तलक्षणाप्रसिद्धिरिति भावः । रूपत्वाद्यवच्छेदेन तादृशप्रतियोगित्वाभावे बाधकमाह सर्व-

(१) न चेति २ पुस्तके पाठः ।

(२) व्याप्यवृत्तेरवच्छेदकत्वानङ्गीकारादितिभावः ।

न्धितावच्छेदकत्वे धूमत्वादेर्हेतुतावच्छेदकस्य तथात्वप्रदर्शनं मूलकृतो विरुद्धमत आह ग्रन्थस्त्विति। धूम एव मात्रो धर्मो यस्येतिव्युत्पत्त्या धूममात्रपदाद्धूमवतो लाभसम्भवात्तत्परित्यज्यैव वह्नेस्त्विति पाठं व्याचष्टे वह्निमतस्त्विति। इत्यादीत्यादिपदान्न वह्नित्वमित्यादावपि न वह्निमत्त्वमित्याद्यर्थः। विरुद्धेति। साध्यविरुद्धदिगवच्छिन्नवृत्तिकस्य तदनवच्छेदकत्वनियमात् तथा च भूगोलकमुदयगिरिमदस्ताचलत्वात् कपालमेतत् घटवत् घटध्वंसादित्यादावव्याप्तिरिति भावः न्यूनेति साध्यन्यूनदेशवृत्तिकस्य साध्यन्यूनकालवृत्तिकस्य च हेतोरधिकरणतायां साध्याधिकरणतावच्छेदकत्वासम्भवात् तन्न्यूनदेशादिवृत्तिकस्य तदनवच्छेदकत्वनियमात् तथा च इदं द्रव्यं पृथिवीत्वात् कालो घटवान् घटादित्यादावव्याप्तिरिति भावः। ननूक्तनियममप्रयोजकमत आह तुल्यवृत्तिकयोश्चेति चकारेणातुल्यवृत्तिकयोः परिग्रहः अवच्छेद्येति स्वरूपसम्बन्धरूपावच्छेद्यावच्छेदकभावस्येत्यर्थः नियन्तुं अवधारयितुं अशक्यत्वादिति तथा च तद्रूपवत्त्वावच्छेदेन तद्रसवत्त्वमित्यादिप्रतीत्यानतिरिक्तवृत्तित्वस्यैवावच्छेदकत्वस्य क्लृप्तस्यावगाहनाद्धेतुसाध्याधिकरणतयोः स्वरूपसम्बन्धरूपावच्छेदकत्वे मानाभावादप्रसिद्धिरेव लक्षणस्येति भावः। नापीति अपिना अन्यूनानतिरिक्तवृत्तित्वस्य परिग्रहः अतो न धूमवान्वह्नेरित्यादौ अतिव्याप्तिः उभयत्र दूषणमाह न्यूनवृत्तिधूमत्वादेरिति। ननु वाच्यं ज्ञेयत्वादित्यादौ साध्याधिकरणत्वातिरिक्ताप्रसिद्धिरत आह स्वान्यूनेति स्वं स्वीयं तथा च स्वीयाधिकरणत्वान्यूनवृत्तिसाध्याधिकरणाताकत्वमर्थः गोत्वस्याप्यश्वत्वत्वन्यूनवृत्तिभिन्नत्वादयं गौरश्वत्वादित्यादावतिव्याप्तेराह स्वव्यापकेत्यादि अग्र इति लाघवादन्योन्याभावगर्भैव व्याप्तिरित्यादि ग्रन्थ इत्यर्थः॥

इति श्रीजगदीशतर्कालङ्कारविरचिता विशेषव्याप्तिटीका समाप्ता।

——:०:——

# अथ जागदीश्याः क्रोड़पत्रम् ।

परिकरःसहकारी न च व्याप्तिपक्षधर्मत्वादिः इति जगदीशः । यो यन्निरूपणानन्तरं निरूपणीयः स तन्निरूपितसङ्गतिमानिति नियमात् निरूपणीयतावच्छेदकावच्छेदेन सङ्गतेरावश्यकत्वे उत्पत्तिक्षणावच्छिन्नघटपक्षकगन्धसाध्यकस्थलीयपृथिवीत्वहेतोरपि निरूपणीयतावच्छेदकधर्माक्रान्ततया तत्र व्याप्तिपक्षधर्मताविरहात्मकसङ्गतिविरहेण तत्स्मरणानुपपत्तिरुक्तनियमभङ्गप्रसङ्गश्चातो व्याप्तिपक्षधर्मत्वादिरित्यत्रादिपदेनावाधितत्वं विवक्षितं तथा च निरुक्तहेतोर्व्याप्तिपक्षधर्मत्ववत्त्वेऽपि अवाधितत्वाभावरूपसङ्गतेस्तत्रापि सत्त्वान्नोक्तदोषद्वयावकाशः न च तत्रत्यपृथिवीत्वस्य व्यभिचारित्वमेवेति वाच्यम् जगदीशमते प्रतियोगिव्यधिकरणसाध्याभावघटितव्याप्तेरेवानुमित्यौपयिकतया तादृशाभावघटितव्यभिचारज्ञानस्यैव निरुक्तव्याप्तिधीविरोधितया पृथिवीत्वे तादृशव्यभिचारासम्भवादिति गदाधरमते तु निरुक्तहेतोरपि व्यभिचारित्वं सम्भवति यद्देशकालावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं तद्देशकालावच्छेदेन साधनं तद्देशकालावच्छेदेन साध्यमिति देशकालघटितव्याप्तेरेवानुमितिप्रयोजकत्वेन सत्प्रतिपक्षग्रन्थेऽभिहितत्वादुत्पत्तिकालावच्छेदेन तादृशव्याप्तिविरहात्मकसङ्गतेस्तत्र सत्त्वान्नोक्तदोष इति मतद्वयेऽपि अवच्छेदकावच्छेदेनैव सङ्गतिरिति ॥ १ ॥

अत्रानुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षःसाध्यवानित्याकारानुमितिपरं वेति शिरोमणिः । अत्रानुमितिपदस्य गौणत्वापातादाचार्य्यानुमितिमात्रस्यैव लिङ्गोपधानमतमनुसृत्य व्याचष्टे साध्यव्याप्येत्यादि इतिजगदीशः । अथात्रलक्षणघटकीभूतप्रतिवध्यतायां तादृशसम्बन्धिग्रहनिष्ठत्वनिवेशे उदासीनेऽतिव्याप्तिः तादृशग्रहत्वव्यापकत्वनिवेशे च आश्रयासिद्ध्यादौ लक्षणसंगमनेऽपि बाधव्यभिचारादावव्याप्तिः बाधादिनिश्चयी-

यप्रतिवध्यतायाः तादृशग्रहत्वाव्यापकत्वादित्यादिदोषसम्भवे जगदीशस्य पूर्वकल्पे गौणत्वापत्तिरूपदोषदानमसंगतमिति । न च तादृशप्रतिवध्यतायां प्रकृतहेतुतावच्छेदकावच्छिन्नलिङ्गताकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यतावच्छेदकविषयित्वावच्छिन्नत्वं निवेश्यं विविधहेतुकपरामर्शजन्यानुमितौ व्यभिचारवारणायाऽव्यवहितोत्तरत्वसम्बन्धेन तल्लिङ्गकपरामर्शविशिष्टतत्पक्षकतत्साध्यकानुमितिं प्रति तल्लिङ्गकपरामर्शत्वेन हेतुतया परामर्शीयविषयितायाः अपि कार्यतावच्छेदकत्वेन न व्यभिचारादावव्याप्तिस्तावतैवोदासीने नातिव्याप्तिः तज्ज्ञानीयप्रतिवध्यतायाःकार्यतावच्छेदकविषयित्वानवच्छिन्नत्वादितिवाच्यम् । वह्निव्याप्यधूमघटवान् पर्वत इत्येकत्र द्वयमिति रीत्या ज्ञानमादाय घटाभाववत्यपर्वते ऽतिव्याप्तिवारणायजन्यतानवच्छेदकविषयित्वानवच्छिन्नत्वस्यैव वाच्यतया व्यभिचारादावसम्भवापत्तेः तादृशज्ञानीयप्रतिवध्यतायास्तादृशजन्यतानवच्छेदकीभूतेन साध्यव्याप्यो हेतुरितिज्ञानीयविषयित्वेनावच्छिन्नत्वादिति । अत्र केचित् । स्वावच्छेदकत्वस्वनिरूपितकारणतावच्छेदकत्वाऽन्यतरसम्बन्धेन कार्यताविशिष्टान्यकिञ्चिद्धर्मावच्छिन्नविषयिताशून्यज्ञाननिष्ठत्वस्य प्रतिवध्यतायां निवेशान्नोक्तदोषाणामवकाशः न च जगदीशमते समानाधिकरणप्रकारताविशेष्यतयोरैक्येन तेजस्त्वव्याप्यवह्निपक्षकतेजस्त्वसाध्यकसमवायेनवह्निहेतुकस्थले तेजस्त्वव्याप्यो वह्निः तेजस्त्वव्याप्यवह्निमत्तेजस्त्वव्याप्यवह्निमानितिज्ञानस्य तादृशजन्यताविशिष्टान्यविषयिताशून्यत्वेन तन्निष्ठप्रतिवध्यतानिरूपितप्रतिबन्धकताशालितेजस्त्वाभाववद्वृत्तिमत्तेजस्त्वव्याप्यवह्न्यभाववत्तेजस्त्वव्याप्यवह्निरूपविशिष्टेऽतिव्याप्तिः तादृशज्ञानस्य सामान्याभावावगाहितया सामान्यघटितविशेषवताबुद्धिप्रतिबन्धकत्वादिति चेन्न समानाधिकरणविषयतयोरैक्यानभ्युपगमेनैतल्लक्षणस्योक्तत्वदिति यद्वा प्रकृतपक्षकप्रकृ-

तसाध्यकानुमितित्वव्यापकं यत्प्रतिवध्यत्वं यच्च प्रकृतप-
क्षकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुविषयकानुमितित्वव्या-
पकं प्रतिन्बध्यत्वमेतदन्यतरनिरूपितप्रतिबन्धकताया लक्षण-
घटकत्वान्न कोऽपि दोषः । अथात्रानुमितिपदम् आचार्य्या-
नुमितिपरमिति व्याख्याने व्यतिरेकव्याप्तिज्ञानस्याचार्य्यमते-
ऽनुमित्यजनकत्वेन प्रकृतानुमितौ तस्या अविषयत्वात्कथं व्यति-
रेकव्याप्तिज्ञानविरोधिन्यनुपसंहारिणि प्रकृतानुमितिप्रतिबन्ध-
कताघटितलक्षणसमन्वयः न चान्वयव्यतिरेकव्याप्तिविषयका-
नुमितिरेव लक्षणघटकेतिवाच्यम् अनुमितितत्कारणज्ञानप-
मितिकल्पपरित्यागबीजप्रतिपादनस्य गौणत्वापातादित्यादिग्र-
न्थस्य सङ्गतिविरोधादिति चेन्न आचार्य्यानुमितिमात्रस्यैव
लिङ्गोपधानपक्षमनुसृत्य व्याचष्टे इति ग्रन्थो हि अनुमिति-
पदस्य लक्षणां विनाऽपि व्याप्तिविषयकानुमितिबोधकत्व-
मिति सूचकः न तु तत्सम्मतानुमितिविशेषसूचकः तथा च
एकविधव्याप्तिविशिष्टहेतुमत्तानिश्चयादनुमितिजनने व्यभिचार-
वारणाय स्वमतेऽपि प्रकृतसाध्यनिरूपितव्याप्तिद्वयविशिष्टहेतुध
र्मितावच्छेदककसाध्यप्रकारकानुमितित्वावच्छिन्नं प्रति प्रकृतस
ध्यनिरूपितव्याप्तिद्वयविशिष्टहेतुमत्तानिश्चयत्वेन कारणत्वमिति
एवं विधयैव व्यतिरेकव्याप्तिविशिष्टहेतुमत्तानिश्चयस्यापि कार-
णत्वं न तु तादृशव्याप्तिविशिष्टहेतुमत्तानिश्चयाव्यवहितोत्त-
रत्वं कार्य्यतावच्छेदकमिति ध्वनितम् तथा च व्यतिरेकव्या-
प्तेरनुमितिविषयत्वे बाधकाभावः । अत्र यदि व्याप्तिद्वयमुभ-
यत्वेन रूपेण हेत्वंशे निवेश्यते तदोभयव्याप्त्यभाववद्धेतो-
र्दोषत्वापत्तेः यदि च प्रत्येकरूपेण निवेश्यते तदा व्यतिरे-
कव्याप्तिविशिष्टधूमेतदुभयाभाववत्पक्षस्य दोषत्वापत्तिरिति
चेन्न प्रकृतपक्षसाध्यकानुमितिजनकतावच्छेदकप्रकारतात्वेन
व्याप्तिद्वयाविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताया
निवेश्यत्वान्न च तथापि अनुपसंहारिणि अव्याप्तिस्तन्मते
एकदानुमितावुभयव्याप्त्योरभानेनान्वयव्याप्तिविशिष्टहेत्ववगा-

ह्यनुमितौ तत्प्रतिवध्यतायाः असत्त्वेन प्रकृतानुमितित्वव्यापकत्वविरहादितिवाच्यम् व्यापकत्वसम्बन्धेन प्रकृतहेतुतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताभिन्नाभयधर्म्मावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यताविशिष्टप्रतिवध्यतानिरूपितत्वस्य प्रतिबन्धकतायां निवेशात् तथा च तत्सम्बन्धेन तत्तज्जन्यताविशिष्टतत्तत्प्रतिबध्यतामादाय न व्यभिचारादावव्याप्तिरिति परमार्थः ॥ २ ॥

ह्रदो वह्निमान् घटत्वादित्यत्र वन्ह्यभाववद्धटेऽतिव्याप्तिमाशङ्क्य हेत्वधिकरणानिष्ठसाध्याभावस्यापि व्यभिचारतया लक्ष्यत्वमङ्गीकृतं जगदीशेन । न चात्र हेतुसामानाधिकरण्येन साध्याभावस्यापि व्यभिचारतया घटत्वावच्छेदेन वह्न्यभावस्य तद्घटिततया विशिष्टान्तराघटितत्वमेव नास्तीति कथं तस्य व्यभिचारित्वमङ्गीकृतमितिवाच्यम् । अप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन प्रतिबन्धकताया विभिन्नतया स्वातिरिक्तं यत्प्रतिबन्धकताऽनतिरिक्तवृत्तीत्यादिनिष्कृष्टविशिष्टान्तराघटितत्वस्यात्राप्यनपायादिति । अत्रेदं बोध्यम् । घटत्वावच्छेदेन वह्न्यभावव्याप्यवत्तानिश्चयस्यापि घटत्वधर्मितावच्छेदकवह्न्यनुमितिविरोधितया तत्रातिव्याप्तिः न च सोऽपि व्यभिचारविशेष एवेति वाच्यम् साधनवति साध्याभावव्याप्यवत्त्वादिकं त्वविरोधित्वान्नाभास इत्यादि साधारणग्रन्थे दीधितिकृता तस्याभासत्वखण्डनादेवं ह्रदो गगनवान् धूमादित्यादौ आधेयावच्छेदेन गगनाभाववत्त्वस्यापि दोषत्वापत्तिः तादृशज्ञानस्य धूमव्यापकगगनाधिकरणनिरूपिताधेयत्वरूपव्याप्तिविशिष्टधूमवान् पक्षः साध्यवानितिबुद्धिप्रतिप्रतिबन्धकत्वादेवं ह्रदत्वसामानाधिकरण्येन वह्निसाध्यकजलहेतुकस्थले जलवद्धटत्वावच्छेदेन वह्न्यभावविशिष्टेऽतिव्याप्तिरिति चेन्न प्रकृतलक्षणघटकीभूतप्रतिबन्धकतायां तत्तत्प्रतिबन्धकताभेदस्य निवेश्यत्वात् तत्तद्विशिष्टविषय-

कनिश्चयधर्मिकाप्रामाण्यज्ञानाभावस्य लक्षणघटकत्वेनानिवेशाद्धानि रुक्तदोषवारणसम्भवादिति विभावनीयम् । अत्र केचित् प्रकृतहेतुधर्मिकप्रकृतसाध्यनिरूपितव्याप्तिग्रहत्वाव्यापकत्वे सति प्रकृतपक्षधर्मिकहेतुमत्ताग्रहत्वाव्यापकत्वे सति प्रकृतपक्षधर्मिकसाध्यवत्ताग्रहत्वाव्यापकत्वे सति साध्यव्याप्यहेतुवैशिष्ट्यावगाहिपक्षेसाध्यावगाहिग्रहत्वव्यापकप्रतिबध्यतान्यप्रकृतसाध्यव्याप्यहेतुधर्मितावच्छेदककप्रकृतसाध्यविधेयताकानुमितित्वव्यापकप्रतिबध्यत्वस्य निवेशे नोक्तस्थलेऽतिप्रसंग इत्यस्मद्गुरुचरणाः ॥ ३ ॥

यादृशविशिष्टविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टत्वं हेत्वाभासत्वमितिजगदीशः । न च यादृशविशिष्टविषयकत्वं प्रकृतानुमित्यवृत्ति तत्त्वं हेत्वाभासत्वमित्येव लाघवादुक्तव्यमिति वाच्यम् । पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तेः । न च स्वनिरूपकज्ञानाव्यवहितोत्तरत्वसम्बन्धेन प्रकृतानुमित्यवृत्ति यद्रूपावच्छिन्नविषयत्वमिति विवक्षणेन वह्निमत्पर्वतेऽतिव्याप्तिरितिवाच्यम् जलवद्ध्रदत्वभाववत्कालीनह्रदपक्षकवह्निसाध्यकस्थले जलवद्ध्रदेऽतिव्याप्तिस्तदीयविषयताया प्रकृतानुमित्यवृत्तित्वादिति चेदत्र ब्रूमः स्वाव्यहितोत्तरत्वस्य तृतीयक्षणसाधारणत्वे नोक्तदोषः जलवान् ह्रद इति निश्चयोत्तरं तृतीयक्षणे जलवद्ध्रदत्वभाववत्कालीनह्रदा वह्निमानित्यनुमितेरसंभवात् ॥ ४ ॥

नन्वनुमितिनिष्ठयादृशविशिष्टविषयकत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तत्त्वं दोषत्वमनाहार्य्यत्वाद्यनिवेशेन लाघवमिति चेन्न यत्र दोषविषयकानुमितिरप्रसिद्धा तत्राव्याप्तिप्रसंगात् ॥ ५ ॥

ननु यद्रूपावच्छिन्नविषयकत्वं प्रकृतानुमित्यव्यवहितपूर्वकालीनानाहार्यनिश्चयावृत्ति तद्रूपवत्त्वमेवास्तु तावतापि निरुक्तदोषवारणं सम्भवतीति चेन्न यादृशवस्तुविशेषविषयकं ज्ञानं तत्पक्षसाध्यहेतुकानुमित्यव्यवहितप्राक्क्षणे न जातं तत्पक्षसाध्यहे-

तुकस्थले तादृशवस्तुविशेषेऽतिव्याप्तिः न च यादृशविशिष्टविष-
यकत्वं यद्रूपावच्छिन्ननिरूपकताकविषयिताशून्यनिश्चयावृत्ति-
प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वमेव वक्तव्यं किं विशिष्टा-
न्तराघटितत्वेनेति । न च प्रतिबन्धकताया विशिष्टविषयिताशू-
न्यभ्रमवृत्तित्वादसम्भव इति वाच्यम् । यद्रूपावच्छिन्नविषयि-
ताशून्ययथार्थज्ञानावृत्तित्वस्य विवक्षणान्न चासाधारणेऽव्या-
प्तिः तज्ज्ञानीयप्रतिबन्धकताया ज्ञानद्वयसाधारणतया तस्या-
स्तादृशविषयिताशून्यपक्षधर्मिकहेतुमत्ताज्ञानवृत्तित्वादितिवा-
च्यम् । विनिगमनाविरहेण तत्र प्रतिबन्धकताद्वयमेकाऽसा-
धारण्यविषयकज्ञानविशिष्टपक्षधर्मिकहेतुमत्तानिश्चयत्वेन द्विती
या पक्षधर्मिकज्ञानविशिष्टासाधारण्यनिश्चयत्वेन तत्र द्वितीयप्र-
तिबन्धकतामादाय लक्षणसमन्वयस्सम्भवतीति चेन्न
द्वितीयलक्षणस्ययथार्थ स्वाघटितत्वेन तथा विवक्षितुम-
शक्यत्वादिति । ननु प्रमेयत्वविशिष्टव्यभिचारेऽतिव्या-
प्तिवारणार्थं यादृशविशिष्टविषयकत्वं प्रकृतानुमि-
तिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वे सति प्रकृतानु-
मितिप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानावृत्ति तत्त्वमे-
वास्तु किं विशिष्टान्तराघटितत्वेन न च ह्रदो वह्निमानित्यादौ
वह्न्यभावव्याप्यवान् वह्न्यभाववान् ह्रद इतिज्ञानीयविषयितानि-
रूपकतावच्छेदकवह्न्यभावव्याप्यवद्वह्न्यभाववद्ध्रदत्वविशिष्टे
ऽतिव्याप्तिरेवं व्यावर्तकधर्मदर्शनप्रतिबन्धकतामादाय मेयत्व-
विशिष्टबाधादावव्याप्तिरिति वाच्यम् यादृशविशिष्टविषयकत्वं
यत्प्रतिबन्धकतानतिरिक्तवृत्तित्वे सति तत्प्रतिबन्धकताऽन
वच्छेदकविषयिताशून्यज्ञानावृत्तीत्यस्य विवक्षितत्वादिति
चेन्न ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्न-
प्रकारताशालिबुद्धिं प्रति स्वावच्छिन्नप्रतियोगिताकत्वसम्ब-
न्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नवि-
शेष्यतेत्यादिनिश्चयत्वेनैव प्रतिबन्धकतायाः कल्पनाद्वह्नि-
विषयित्वस्य प्रतिबन्धकतानवच्छेदकत्वेन वह्न्यभाववद्ध्रद-

विषयकत्वस्य तादृशविषयिताशून्यज्ञानवृत्तित्वविरहाद्बाधादौ सर्वत्रासम्भवापत्तेः ह्रदत्वावच्छेदेन वह्नेः साध्यतास्थले वह्न्यभाववद्वह्न्यभाववद्ह्रदेऽतिव्याप्तेश्च ॥ ६ ॥

ननु स्वानवच्छिन्नविषयतावच्छेदकं यत्प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकं तद्घटितत्वस्यैव सम्यक्त्वे तादृशरूपे प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकताऽवच्छेदकत्वनिवेशनं व्यर्थमिति चेन्न वह्निरितिज्ञानीयविषयितायाः प्रकृतानुमित्यवृत्तित्वेन तन्निरूपकतावच्छेदकीभूतवह्नित्वादिघटितवह्न्यभाववद्ह्रदादिरूपबाधादावसम्भवापत्तेः । न चानुमितिनिष्ठविषयितानिरूपकताऽनवच्छेदकत्वविवक्षणे वह्न्यभाववद्ह्रदादौ नासम्भव इति वाच्यं मेयत्वविशिष्टवह्न्यभाववद्ह्रदादावतिव्याप्तिः ह्रदो वह्निमान् वह्निव्याप्यधूमवान् जातिमान् वह्न्यभाववांश्चेत्याद्यनुमितेर्जातित्वेन ह्रदत्वावगाहितया वह्न्यभाववद्ह्रदत्वस्य प्रकृतानुमितिनिष्ठविषयितानिरूपकताऽनवच्छेदकत्वविरहान्न चानुमितिनिष्ठविषयितानिरूपकताऽवच्छेदकतापर्य्याप्त्यधिकरणाभिन्नत्वनिवेशे नोक्तातिप्रसंग इति वाच्यम् पर्व्वतः पर्व्वतीयवह्न्यभाववान् वह्न्यभावव्याप्याद्दित्यत्र पर्व्वतीयवह्निमत्पर्वतात्मकबाधेऽव्याप्तेस्तादृशसमूहावलम्बनानुमितिनिष्ठविषयितानिरूपकतावच्छेदकवह्निमत्पर्वतत्वविशिष्टघटितत्वादिति ॥ ७ ॥

अथात्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदादावतिव्याप्तिः तद्विषयितायाः प्रतिबन्धकतानतिरिक्तवृत्तित्वान्न च ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायां निवेशे न दोष इति वाच्यम् असाधारणेऽव्याप्त्यापत्तेः तत्प्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नत्वान्न चासाधारणविषयित्वानवच्छिन्नत्वज्ञानवैशिष्ट्यावच्छिन्नत्वोभयाभाववत्त्वस्य प्रतिबन्धकताविशेषणत्वे न कोऽपि दोष इति वाच्यम् अप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन ज्ञानवैशिष्ट्यानवच्छिन्नमपि प्रतिबन्धकत्वान्तरं तत्र जगदीशमते कल्प्यते तथा चातिव्याप्तितादवस्थ्यं न च ज्ञानवै-

शिष्ट्यावच्छिन्नप्रतिबन्धकताऽव्याप्यत्वघटितोभयाभावानिवेशे न-
दोष इति वाच्यम् वह्न्यभाववज्जलादिमद्वृत्तिजलाभाववान् ह्रदो
वह्निमान् धूमादित्यत्राश्रयासिद्धौ तथाप्यव्याप्त्यापत्तेः । तत्प्र-
तिबन्धकतायां निरुक्तोभयाभावासत्त्वादत्र केचित् स्वव्याप्यत्व-
स्वनिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यता-
निरूपितत्वोभयसम्बन्धेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताव-
त्त्वासाधारण्यविषयित्वानवच्छिन्नत्वोभयाभावस्य प्रतिबन्धक-
तायां निवेशान्न कोऽपि दोषः व्याप्यत्वं व्यापकत्वञ्च स्वरूप-
सम्बन्धेन स्वव्याप्यत्वनिवेशाद्बाधादौ नाव्याप्तिः वैशि-
ष्ट्यघटकद्वितीयसम्बन्धनिवेशान्निरुक्ताश्रयासिद्धिसंग्रहः त-
ज्ज्ञानीयप्रतिबन्धकतायां निरुक्तोभयसम्बन्धेन ज्ञानवैशिष्ट्या-
वच्छिन्नप्रतिबन्धकताविरहान्न च जलवद्ध्रदकालीनवह्निव्या-
पकीभूताभावप्रतियोगिजलेऽतिव्याप्तिः तज्ज्ञानीयप्रतिबन्धकता-
यामसाधारण्यविषयितानवच्छिन्नत्वविरहेणोभयाभावसत्वा-
दिति वाच्यम् ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावदन्यप्रति-
बन्धकतानवच्छेदकत्वासाधारण्याविषयित्वाव्यापकविषयिता-
शून्यज्ञानावृत्तित्वोभयाभाववत्त्वस्य यद्रूपावच्छिन्नविषयितायां
निवेशादुभयाभावप्रतियोगिकोटौ प्रथमप्रतियोगिनिवेशात्पू-
र्वोक्ताश्रयासिद्धौ नाव्याप्तिः द्वितीयप्रतियोगिनिवेशादसा-
धारणे नाव्याप्तिः प्रतिबन्धकतावत्त्वञ्च निरुक्तसम्बन्धेन
सम्बन्धव्यावृत्तिरपि पूर्ववदित्याहुः । तन्न सङ्गच्छते सामा-
न्यघटितविशेषाभावघटिताप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन
सामान्यघटितविशेषवत्तानिश्चयत्वेन प्रतिबन्धकतान्तरस्वीक-
र्तृनये सामान्यधर्मपर्य्याप्तावच्छेदकताकप्रकारताकनिश्चय-
त्वेन प्रतिबन्धकतान्तरकल्पनस्यायुक्तत्वापातादेवञ्च स्वीकर-
णीयमन्यथा विशेषवत्तानिश्चयेऽपि प्रतिबन्धकताद्वयसत्वे सा-
मान्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताऽनुत्तेजकीभूतविशे-
षाभावघटितविशेषवत्तानिश्चयधर्मिकाप्रामाण्यग्रहदशायां विशे-
षणवत्तानिश्चयसत्वे विशिष्टबुद्ध्यनुत्पादप्रसङ्गेन विशिष्टवत्तानि-

श्रयत्वेन प्रतिबन्धकतान्तरकल्पनस्यायुक्तत्वापातात् तथा च वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदविषयकनिश्चये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वासत्त्वेन तादृशप्रतिबन्धकतायां निरुक्तोभयाभावसत्त्वादतिव्याप्तितादवस्थ्यापत्तेरिति परन्तु प्रकृतलक्षणघटकीभूतप्रतिबन्धकतायां तत्प्रतिबन्धकताभिन्नत्वनिवेशात्तादृशविशिष्टनिश्चयधर्मिकाप्रामाण्यज्ञानाभावानां लक्षणघटकतया निवेशाद्धा अनिरुक्तातिव्याप्तिवारणादिति ध्येयम् याद्दशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तीत्यर्थलाभेन तन्निरासात् प्रतिबन्धकत्वं वा प्रतिबन्धकतावच्छेदकविषयितावत्त्ववाच्यम् तथा च संस्कारादेरपि तादृशविषयितावत्त्वादेव नासम्भव इति जगदीशेनोक्तम्। अत्रेयमनुपपत्तिः। पक्षताग्रन्थे स्वयमेव तादृशविषयिताशून्यत्वस्य संशयेऽभिहितत्वादसम्भवः । न च संशयान्यज्ञानत्वं निश्चयत्वं संशयत्वञ्च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रकारताविशिष्टप्रकारताशालिज्ञानत्वं सांशयिकविषयताविशेषोऽपि प्रतिबन्धकतावच्छेदकःसंशये विशेष्यताद्वयस्वीकारादिति मतान्तरमवलम्ब्य संशये तादृशविषयितासत्त्वान्नासम्भव इति वाच्यं तद्धर्म्मावच्छिन्नप्रकारताऽन्यप्रकारत्वानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वरूपनिश्चयत्वस्य पक्षताग्रन्थे जगदीशेनोक्तत्वेन सन्दर्भविरोधापत्तेरिति चेन्न प्रतिबन्धकतावच्छेदकविषयितावत्त्वपदेन विशेष्यताविशिष्टविशेष्यताया उक्तत्वात् वैशिष्ट्यञ्च स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकतानिरूपितत्व स्वनिष्ठप्रतिबन्धकतावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितावच्छेदकताश्रयप्रकारतानिरूपितत्वोभयसम्बन्धेन तथा च तादृशविशेष्यताविशिष्टविशेष्यतायाः संशयादौ सत्त्वान्नासम्भवः प्रथमसम्बन्धानिवेशे वह्न्यभाववान्

ह्रद इतिज्ञानीयह्रदत्वावच्छिन्नविशेष्यतामादाय ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववज्जलेऽतिव्याप्तिरतस्तन्निवेशः तत्रैव वह्न्यभाववज्जातिमत्यतिव्याप्तिवारणाय प्रथमसम्बन्धमध्ये द्वितीयपर्य्याप्तिनिवेशः । तार्णवह्नदेऽतिव्याप्तिवारणाय द्वितीयसम्बान्धनिवेश इति दिक् ॥ ८ ॥

एवं यत्प्रतिबन्धकतानातिरिक्तवृत्ति स्वातिरिक्तेन तत्प्रतिबन्धकतानातिरिक्तवृत्तिविषयिताकेनाघटितं यादृशविशिष्टं तत्त्वमिर्थवैशिष्टयञ्च स्वाधिकरणवृत्तित्वसम्बन्धेन स्वाधिकरणत्वञ्च स्वानधिकरणवृत्तिविषयितानिरूपकत्वसम्बन्धेनावृत्तित्वञ्च स्वानवच्छिन्नप्रकारतावच्छेदकत्वस्वावच्छिन्नप्रकारतावच्छेदकत्वोभयसम्बन्धेन अत्र केचित् प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं हेत्वाभासत्वं वैशिष्टयञ्च स्ववृत्तित्वस्ववृत्तिरूपावृत्तित्वोभयसम्बन्धेन स्ववृत्तित्वञ्च स्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन स्ववृत्तिरूपावृत्तित्वञ्च स्वानवच्छिन्नप्रकारतावच्छेदकत्वस्वावच्छिन्नघटितत्वाघच्छेदकत्वोभयसम्बन्धेन ॥ ९ ॥

अत्र वदन्ति यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरमनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षताच्छेदकविशिष्टपक्षेसाध्यतावच्छेदकविशिष्टसाध्यवैशिष्टयावगाहित्वस्य साध्यनिरूपितव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वमिति शिरोमणिः । अत्र द्वितीयपक्षपदम पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकवैशिष्टयलाभाय तेन ह्रदे वह्न्यभावनिश्चयोत्तरं कालिकसम्बन्धेन ह्रदत्वविशिष्टे वह्निस्तदूभयव्यवत्त्वस्यानुमितावपि नासम्भव इति जगदीशेनोक्तम । अत्रेदं विविच्यते न च समवायसम्बन्धेन ह्रदत्वविशिष्टे वह्न्यवगाहित्ववह्निव्याप्तिविशिष्टहेतुमत्तावगाहित्वयोरेव वह्न्यभावविशिष्टह्रदविषयकनिश्चयावृत्तित्वाद्दोषविषयकनिश्चयोत्तरानुमितित्वावच्छेदेनैव तादृशनिश्चयावृत्तिविषयिताप्रतियोगिकस्य समवा-

येन ह्रदत्वविशिष्टे साध्यतद्व्याप्यवत्त्वावगाहित्वयोरभावसत्त्वेन नासम्भव इति द्वितीयपक्षपदं व्यर्थमेवेति अत्र केचित् यादृशस्थलविशेषे कालिकसम्बन्धावच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकवह्न्यभावविशिष्टह्रदविषयकं ज्ञानं न जातं तत्रत्यदोषेऽव्याप्तिरिति परे तु तादृशोभयाभावपदेन तादृशोभयसामान्याभावस्यैव निवेशनीयत्वादन्यथोभयप्रतियोगिकं घटविशिष्टतादृशोभयाभावमादाय सामान्यपदादानेऽपि पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थलेऽतिव्याप्तेर्दुर्वारत्वापत्तेः । तथा च वह्न्यभावविशिष्टह्रदविषयकनिश्चयावृत्तिविषयिताप्रतियोगिकस्य कालिकेन ह्रदत्वविशिष्टधर्मिकवह्न्यवगाहि समवायेन ह्रदत्वविशिष्टधर्मिकवह्न्यवगाहिज्ञानसाधारणह्रदत्वविशिष्टधर्मिकवह्न्यवगाहिताद्वयसमुच्चितनिरुक्तोभयत्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकाभावस्य तद्दोषविषयकनिश्चयोत्तरानुमितिसामान्यान्तर्गतायां कालिकेन ह्रदत्वविशिष्टधर्मिकवह्न्यनुमितावसत्त्वेनासम्भवस्य सुघटतया पक्षपदसार्थक्यात् । ननु पक्षपदप्रवेशेऽपि निरुक्तोभयत्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकाभावस्य यद्विषयकनिश्चयावृत्तिविषयिताप्रतियोगिताकस्य पर्य्यवसिततया निर्वह्निः पर्वतो वह्निमानित्यत्र घटवद्गृहेऽतिव्याप्तिः । घटवद्गृहेविषयकनिश्चयोत्तरानुमितित्वव्यापकनिरुक्तोभयाभावस्य घटवद्गृहविषयकनिश्चयावृत्तिर्या घटाभाववद्गृहेकालीननिर्वह्निः पर्वतो वह्निमानितिज्ञानीया निर्वह्निधर्मिकवह्न्यवगाहिता तत्प्रतियोगिकत्वादिति चेन्न निरुक्तोभयत्वपर्य्याप्तावच्छेदकताकाभावे यद्विषयकनिश्चयवृत्तितानवच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वस्य विवक्षणान्न दोष इति ध्येयम् ॥ १० ॥

इत्थञ्च यादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्ये यादृशविशिष्टविषयकनिश्चयावृत्तिविषयिताप्रतियोगिकः प्रकृतसाध्यावगाहित्वप्रकृतसाध्यव्याप्यहेतुमत्त्वावगाहित्वोभ-

यव्यतिरेकस्तादृशविशिष्टमेव प्रकृतपक्षसाध्यकन्यायस्थलीय हेतुदोष इति फलितार्थः अनुमितीत्यत्र सामान्यपददानात्पर्वतो वह्न्यभावव्याप्यवानित्यत्र वह्निमत्पर्वते नातिव्याप्तिरिति जगदीशः । अत्रेयमनुपपत्तिः न च वह्निमान् पर्वतो वह्न्यभावव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवांश्चेत्याहार्य्यनिश्चयसम्भवात् तादृशोभयाभावस्य तादृशनिश्चयावृत्तिविषयिताप्रतियोगिकत्वविरहात्सामान्यपदं विनापि नातिव्याप्तिरिति वाच्यम् असम्भववारणायानाहार्य्यत्वस्याग्रे विवक्षणीयत्वादिति यद्यपि निर्वह्निर्वह्निमानित्यादौ घटवद्गृहादावतिप्रसङ्गभयेनहार्य्यसामान्यभेदो न निवेशयितुं शक्यतेऽपि तु तत्तदाहार्य्यव्यक्तिभेदएव तथा च निर्वह्निर्वह्निमानित्याकारकाऽऽहार्य्यभेदानिवेशेभोक्तातिप्रसंगः । एवं वह्न्यभावव्याप्यसाध्यकस्थले तादृशहार्य्यभेदानिवेशेनै ववह्निमत्पर्व्वतेनातिप्रसंगस्तथापि पर्वतत्वावच्छेदेन वह्नेस्साध्यत्वे तत्रत्यसत्प्रतिपक्षेऽव्याप्तिवारणाय तादृशस्थले आहार्य्यभेदस्यावश्यःनिवेशनीयत्वात्पर्वतो वह्न्यभावव्याप्यवानित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिवारणाय सामान्यपदं सुस्थितमिति । केचित्तु स्वप्रयोज्यत्व स्वाव्यवहितोत्तरज्ञानीयत्वोभयसम्बन्धेनेच्छाविशिष्टान्यत्वं प्रकृतेऽनाहार्य्यत्वं तच्च यद्रूपावच्छिन्नविषयतायामेव निवेश्यमुक्तस्थले चोक्तज्ञानीयवह्निमत्पर्वतविषयितायां निरुक्तोभयसम्बन्धेनेच्छाविशिष्टत्वादिच्छाविशिष्टान्यवह्निमत्पर्वतविषयिताशालिनिश्चये तथाविधावगाहिताद्वयस्य सत्त्वेन तादृशोभयाभावस्येच्छावदन्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयावृत्तिविषयिताप्रतियोगिकत्वस्यानपायाद्वह्निमत्पर्वतेऽतिप्रसंगो दुर्वारइति सामान्यपदं पूरणीयमिति न च निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपदोषेऽव्याप्तिः वह्न्यभाववन्निर्वह्निर्वह्निमान् वह्निव्याप्यवांश्चेत्याकारकज्ञानीयदोषविषयितायां निरुक्तोभयसम्बन्धेनेच्छावैशिष्ट्यविरहात्पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारतायां तद्व्याप्यप्रकारतायामेवे-

च्छाप्रयोज्यत्वस्वीकारेणैव निरुक्तज्ञानस्याहार्य्यत्वनिर्वाहात् दोषविषयतायामिच्छाप्रयोज्यत्वे मानाभावादिति वाच्यम्। समानधर्मिकविरोधिद्वयविषयितायामिच्छाप्रयोज्यत्वनियमात्। तादृशज्ञानीयदोषविषयितायामपि निरुक्तसम्बन्धेनेच्छावैशिष्ट्यानपायादित्याहुः। परे तु स्वाव्यवहितोत्तरज्ञानीयत्वस्वावच्छिन्नावच्छेदकताकप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेनेच्छाविशिष्टयद्रूपावच्छिन्नविषयिताशून्यज्ञानवृत्तित्वं यद्रूपावच्छिन्नविषयितायां निवेश्यं तादृशविषयितायां यद्रूपावच्छिन्नविषयतावहिर्भूतविषयित्वानिरूपितत्वमपि देयमन्यथा निर्वह्निपर्वतो वह्निमानित्यादौ वह्न्यभावादावतिव्याप्तिः तादृशोभयसम्बन्धेनेच्छावद्वह्न्यभावत्वावच्छिन्नविषयिताशून्यः वह्न्यभाव इत्याकारकनिश्चय एव न तु निर्वह्निपर्वतो वह्निमानितिनिश्चय इति पक्षे साध्यावगाहित्वस्य तत्रावृत्तित्वादेवं तादृशविषयिताशून्यज्ञानवृत्तियद्रूपावच्छिन्नविषयितायामपि निरुक्तविशेषणं देयमन्यथा निर्वह्निःपर्वतो वह्निमानित्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धावव्याप्तिः तादृशोभयसम्बन्धेनेच्छाविशिष्टा सती बह्निमत्पर्वतत्वावच्छिन्नविषयित्ववहिर्भूतविषयित्वानिरूपिता या वह्निमत्पर्वतत्वावच्छिन्नविषयिता तच्छून्ये निर्वह्निःपर्वतो वह्निमानिति निश्चये तादृशावगाहित्वस्य सत्त्वान्निरुक्तोभयाभावस्य विरोधिविषयिताप्रतियोगिकत्वविरहाद्बाधादिज्ञानस्येच्छाविरहविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वादिच्छायाः प्रतिबन्धकतानवच्छेदकत्वादिति सर्वसामञ्जस्यमित्याहुः। तन्न पर्वतो वह्निमान् वह्न्यभावव्याप्यवान् तद्व्याप्यवांश्चेत्याकारकाहार्य्यज्ञानप्रयोजकीभूतेच्छावच्छिन्नावच्छेदकताकप्रतिबन्धकताऽवच्छेदकत्वस्य वह्निमत्पर्वतविषयितायामसत्त्वेन सामान्यपदव्यावृत्त्यसंगतेः। वह्निमान् वह्न्यभाववानित्यादौ वह्निविशिष्टवह्निमदात्मकवाधेऽव्याप्तेश्च वह्निमद्वह्निमत्त्वावच्छिन्नविषयितायाः कुत्रापि बुद्धौ प्रतिबन्धकताऽनवच्छेदकत्वेन निरुक्तसम्बन्धेनेच्छाविशिष्टयद्रूपावच्छिन्नविषयित्वाप्रसिद्धेः।

नव्यास्तु स्वानिरूपकज्ञानानिरूपितत्व स्वावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकताकविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकावच्छिन्नत्व स्वनिरूपकज्ञाननिरूपितत्वैतत्त्रितयसम्बन्धेन यत्किञ्चिद्विषयितावैशिष्टप्रकारताशालिज्ञानान्यज्ञानवृत्तियद्रूपावच्छिन्नविषयिताशालिज्ञानत्वं प्रकृते ऽनाहार्य्यनिश्चयत्वमतो न कोऽपि दोष इत्याहुः । न च वह्निमान् पर्वतो वह्न्यभावव्याप्यवान् नवेति संशयेऽपि तादृशावगाहित्वयोः सत्त्वात्तथापि नातिप्रसंगइति वाच्यम् ह्रदो वह्निमान्नवेतिसंशयवारणाय सामान्यतः संशयान्यत्वस्य निवेश्यत्वात् संशयत्वञ्च स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रकारताविशिष्टप्रकारताशालिज्ञानत्वं न च दोषांशे एव संशयान्यत्वं निवेशनीयमिति वाच्यम् पर्वतो वह्न्यभावव्याप्यवानित्यादौ तादृशसंशयस्याप्रसिद्ध्या वह्निमत्पर्वतेऽतिव्याप्तेर्दुर्वारत्वापत्तेःदोषांशे संशयाननुगतत्वाच्चेति ध्येयम् । केचित्तु पर्वतो वह्न्यभावव्याप्यवानित्यादावित्यादिपदेन वह्न्यभावव्याप्यवत्पर्वतो घटवान् धूमादित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिः संभवति न च धर्मितावच्छेदकांशे संशयाकारकतद्वत्तानिश्चयावृत्तिविषयिताप्रतियोगिकत्वस्य निरुक्तोभयाभावे विरहान्नातिव्याप्तिरिति वाच्यम् । धर्मितावच्छेदकांशे संशयानङ्गीकारात् तादृशनिश्चयस्यासम्भवात् वह्न्यभाववद्घटविषयकनिश्चयोत्तरं जातिमान् वह्निमानित्यनुमितौ निरुक्तोभयाभावविरहादसंभववारणाय निरुक्तावगाहिताद्वयशरीरे पक्षतावच्छेदकपर्य्याप्तावच्छेदकताकत्वनिवेशस्यावश्यकत्वेन धर्मितावच्छेदकांशे संशयस्वीकारेऽपि क्षतिविरहादिति प्राहुः ॥

मेयत्वाविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वं देयम् तदर्थश्च प्रकृतलक्षणाश्रयीभूतं यद्विशिष्टान्तरं

वस्तुगत्या यद्धेत्वाभासत्वविशिष्टात् भिन्नं तद्घटितत्वरूपं निवेशितं जगदीशेन । अत्रेयमाशङ्का न चात्र कल्पे सामान्यपदं व्यर्थं पर्वतो वह्न्यभावव्याप्यवानित्यत्र वह्निमत्पर्वतस्य वस्तुगत्या हेत्वाभासत्वविशिष्टाद्भिन्नत्वेन तद्घटितत्वेन च नातिव्याप्तिरिति वाच्यम् पर्वतो वह्न्यभावव्याप्यवान् वह्निमत्पर्वतकालीनधूमाभावादित्यत्र वह्निमत्पर्वतकालीनधूमवत्पर्वतरूपासिद्धौ प्रकृतलक्षणाश्रयीभूतेन वस्तुगत्या हेत्वाभासत्वविशिष्टाद्भिन्नेन वह्निमत्पर्वतेन घटितत्वादव्याप्तिवारणाय सामान्यपदसार्थक्यात् । यद्यपि सामान्यपददानेऽपि तत्राव्याप्तिः सुघटैव पर्वतो वह्न्यभावव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवह्निमत्पर्वतकालीनधूमाभाववांश्चेत्यस्याहार्यत्वात् तथापि पर्वतो वह्न्यभावव्याप्यवान् पर्वतीयवह्न्यभावादित्यत्र पर्वतीयवह्निमत्पर्वतरूपस्वरूपासिद्धौ वह्निमत्पर्वतेन घटितत्वादव्याप्तिवारणाय सामान्यपदसार्थक्यादिति ध्येयम् । न च प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र व्यभिचारस्य वस्तुगत्या हेत्वाभासभिन्नेनाभाववद्वृत्तिप्रमेयत्वेन घटितत्वादव्याप्तिरिति वाच्यम् । गृहे घटसामान्याभावे साध्ये गृहस्य नीलघटवत्त्वरूपबाधस्येव तस्य लक्ष्यत्वाद्वस्तुगत्या हेत्वाभासत्वविशिष्टाद्भिन्नत्वविरहादितिनिगर्वः । न च तथापि विरोधिविषयिताप्रयुक्तत्वनिवेशो व्यर्थः । निर्वह्निर्वह्निमानित्यत्र घटवद्गृहस्य हेत्वाभासत्वविशिष्टात् भिन्नेन स्वेनैव घटितत्वान्नातिव्याप्तिरिति वाच्यम् निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपे दोषेऽव्याप्तिः । तस्य प्रकृतलक्षणाश्रयीभूतेन वह्न्यभावरूपहेत्वाभासभिन्नेन घटितत्वादिति न च तथापि धूमाभाववद्धूमव्यभिचारिवह्निमद्बाधेऽव्याप्तिः । तस्य प्रकृतलक्षणाश्रयीभूतेन वस्तुगत्या हेत्वाभासभिन्नेन धूमव्यभिचारिवह्निमत्त्वेन घटितत्वादिति चेदेतद्रस्यरसेनैव वस्तुतस्तु कल्पानुशरणादिति ॥

वस्तुतस्तु यद्विषयकनिश्चयत्वविरोधियादृशविषयिताप्रतियोगिको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयावृत्तितादृश-

विषयिताप्रतियोगिकस्तादृशो ऽभावः तथाविधविशिष्टाघटितत्वमर्थो वक्तव्य इति नोक्ताव्याप्त्यवकाश इति जगदीशः । अथ प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादाववृत्तित्वाभाववद्वृत्तिप्रमेयत्वरूपनिरुक्तव्यभिचारेऽव्याप्तिः । निरुक्तोभयाभावप्रतियोगिव्यभिचारविषयकनिश्चयावृत्तिप्रकृतसाध्यानरूपितव्याप्तिविशिष्टहेतुमत्पक्षावगाहित्वस्य प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य च वृत्तिप्रमेयत्वरूपबाधविषयकनिश्चयावृत्तित्वेन बाधात्मकविशिष्टान्तरघटितत्वादेवम् यत्र ह्रदत्वावच्छेदेन वह्नेः पक्षतावच्छेदकत्वं तत्र वह्निमद्ह्रदो वह्निमानित्यादौ ह्रदत्वावच्छेदेन वह्न्यभाववद्ह्रदात्मकबाधादावव्याप्तिः ह्रदत्वसासामानाधिकरण्येन वह्न्यभाववद्ह्रदात्मकाश्रयासिद्धिरुपेण तादृशविशिष्टान्तरेण घटितत्वादेवं धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निमदात्मकबाधेऽव्याप्तिश्च निरूक्तोभयाभावप्रतियोगिनो निरूक्तबाधविषयकनिश्चयावृत्तिप्रकृतसाध्यव्याप्यहेतुमत्त्वावगाहित्वस्य केवलव्यभिचारविषयकनिश्चयावृत्तितया शुद्धव्यभिचारात्मकविशिष्टान्तरेण घटितत्वादिति नच यद्विषयकनिश्चयवृत्तितानवच्छेदकयादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयोत्तरानुमितिसामान्ये तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशतादृशधर्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभावस्तदघटितत्वस्य विवक्षणान्न प्रागुक्तदोषाणामवकाशः प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र तादृशधर्मान्तर्गतस्य साध्यव्याप्यहेतुमत्त्वावगाहितात्वस्य वृत्तिप्रमेयत्वरूपबाधविषयकनिश्चयवृत्तितानवच्छेदकत्वविरहेण वृत्तिप्रमेयत्वस्य वह्निमद्ह्रदो वह्निमानित्यत्र तादृशधर्मान्तर्गतस्य ह्रदत्वसामानाधिकरण्येन वह्न्यवगाहितात्वस्य सामानाधिकरण्येन वह्न्यभाववद्ह्रदविषयकनिश्चयवृत्तितानवच्छेदकत्वविरहेण सामानाधिकरण्येन वह्न्यभाववद्ह्रदस्य च तथा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र तादृशधर्मान्त-

र्गतस्य पक्षधर्मिकसाध्यावगाहितात्वस्य व्यभिचारविषयक-
निश्चयवृत्तितानवच्छेदकत्वविरहेण व्यभिचारस्य विशिष्टा-
न्तरत्वाभावादिति वाच्यम् बाधविशिष्टव्यभिचारादावतिव्या-
प्त्यापत्तेः । तत्र बाधविशिष्टव्यभिचारविषयकनिश्चयवृत्तिता-
नवच्छेदकयादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिताको निरु-
क्तोभयाभावः यादृशधर्मान्तर्गतपक्षे साध्यावगाहितात्वं हेतौ
व्याप्त्यवगाहितात्वं द्वयमेव तादृशधर्मद्वये च बाधविषयकनि-
श्चयवृत्तितानवच्छेदकत्वस्य केवलव्यभिचारविषयकनिश्च-
यवृत्तितानवच्छेदकत्वस्य च विरहेण केवलबाधस्य केवलव्य-
भिचारस्य च विशिष्टान्तरत्वाभावाद्व्यभिचारविशिष्टबाध-
स्यैव तादृशविशिष्टान्तरतया बाधविशिष्टव्यभिचारस्य तद-
घटितत्वादिति चेन्न स्वावच्छिन्नविषयकनिश्चयवृत्तितानव-
च्छेदकीभूतनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकं यत्कि-
ञ्चिद्रूपं स्वभिन्नयद्रूपावच्छिन्नविषयकनिश्चयवृत्तितानवच्छे-
दकं तद्रूपावच्छिन्नाघटितत्वस्य लक्ष्यतावच्छेदके निवेशनीय-
त्वादवच्छेदकत्वमत्रावच्छेदकतावच्छेदकसाधारणम्बोध्यम् ।
तथा च प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र प्रकृतसाध्यव्याप्यहे-
त्ववगाहितात्वं वह्निमद्ध्रदो वह्निमानित्यत्र ह्रदत्वसामानाधि-
करण्येन वह्न्यवगाहितात्वं धूमव्यभिचारिवह्निमान् धूमवान्
वह्नेरित्यत्र प्रकृतपक्षे धूमावगाहितात्वं च यत्किञ्चित्पदेनो-
पादाय तादृशावगाहितात्वादिकं न स्वभिन्नव्यभिचारविष-
यकनिश्चयवृत्तितानवच्छेदकं किन्तु स्वभिन्नव्यभिचारा-
दिव्याप्यवद्धेत्वादिविषयकनिश्चयवृत्तितानवच्छेदकं तदघ-
टितत्वस्य सत्वान्निरुक्तव्यभिचारादौ लक्षणसमन्वयः । अत
एव प्रतियोगित्वाभाववज्जलवद्ध्रदपक्षक वह्निसाध्यकस्थले व-
ह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदात्मकासाधारण नाव्या-
प्तिः शुद्धह्रदत्वविशिष्टे वह्न्यवगाहितात्वमादाय लक्षणसमन्वयात्
प्रतियोगित्ववज्जलादेस्तथाविधविशिष्टान्तरत्वाभावादवच्छे-
दकावच्छेदेन साध्यवत्पक्षादिकं लक्ष्यमेवेति ध्येयम् ॥

अथात्र कल्पे यद्विषयकनिश्चयावृत्तियादृशविषयिताप्रतियोगि-
कों निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयावृत्तितादृशविष-
यिता तदघटितत्वमित्यस्यैव सम्यक्त्वे तादृशविषयिताप्रतियो
गिक इत्यस्य निवेशो व्यर्थः नच पर्वतः कपिलवह्न्यभाववान्
वह्न्यभावव्याप्यवत्त्वादित्यत्र कपिलवह्निमत्पर्वतरूपबाधविष
यकनिश्चयावृत्तिर्या तादृशहेतुमत्त्वावगाहिता तत्प्रतियोगिकस्ता
दृशोभयाभावः तादृशहेत्ववगाहितायां तदन्यवह्निमत्पर्वतविषय-
कनिश्चयावृत्तित्वेन वह्निमत्पर्वतस्यापि विशिष्टान्तरतया निरु-
क्तबाधस्य तद्घटितत्वादव्याप्तिवारणाय प्रतियोगिक इत्यन्तेन
तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकस्तदन्ययद्विषय-
कनिश्चयावृत्तिविषयिताप्रतियोगिको निरुक्तोभयाभावस्तद-
घटितत्वस्य विवक्षणीयतया न तद्वैयर्थ्यमिति तथा च
यद्विषयकनिश्चयोत्तरानुमितित्वव्यापको यद्विषयकनिश्चयवृ-
त्तितानवच्छेदकीभूततादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिता-
कनिरुक्तोभयाभावः तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेद-
कीभूततादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभया-
भावः तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकः तद-
घटितत्वमित्यस्य पर्य्यवसिततया उक्तस्थले हेतुवैशिष्ट्याव-
गाहितात्वस्य वह्निमत्पर्वतविषयकनिश्चयवृत्तितावच्छेदकत्वे-
ऽपि हेतुवैशिष्ट्यावगाहितात्वघटितधर्मावच्छिन्नप्रतियोगिता-
कनिरुक्तोभयाभावस्य वह्निमत्पर्वतविषयकनिश्चयोत्तरानुमि-
तित्वव्यापकत्वाभावेन वह्निमत्पर्वतस्य तादृशविशिष्टान्तरत्वा-
भावादुक्ताव्याप्तिवारकतयैव तस्य सार्थकत्वादिति वाच्यं त-
न्निवेशेऽपि प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादावव्याप्तिवारणाय
यद्विषयकनिश्चयोत्तरानुमितिसामान्ये यद्विषयकनिश्चयवृत्ति-
तानवच्छेदकयादृशयत्किञ्चिद्धर्मघटितधर्मावच्छिन्नप्रतियोगि-
ताकनिरुक्तोभयाभावः तदन्ययद्विषयकनिश्चयोत्तरानुमितिसा-
मान्ये तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशयत्कि-
ञ्चिद्धर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः तदघटितत्व-

ऽप्यावश्यं विवक्षणीयतया प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेत्ववगाहितात्वं यत्कि-ञ्चित्पदेनोपादाय तादृशावगाहितात्वं न निरुक्तव्यभिचा-रादिवृत्तिप्रमेयत्वादिविषयकनिश्चयवृत्तितानवच्छेदकं किन्तु तद्भिन्नतादृशव्यभिचारादिव्याप्यवत्त्वादिनिश्चयवृत्तितानव-च्छेदकमेवेति तादृशव्याप्यविशिष्टहेत्वादिकमेव तादृशविशि-ष्टान्तरं तद्घटितत्वस्योक्तव्यभिचारादौ सत्त्वान्न कोऽपि दोष इति निष्कृष्टकल्पेऽपि यद्विषयकनिश्चयवृत्तितानवच्छेदकधर्मघ-टितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः तादृशयत्कि-ञ्चिद्धर्मस्तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदक तद्घटि-त्वविवक्षणेनैव पर्वतः कपिलवह्न्यभाववान् वह्न्यभावव्याप्या-दित्यादौ कपिलवह्निमत्पर्वतरूपबाधेऽव्याप्तिवारणं सम्भवति तादृशबाधविषयकनिश्चयवृत्तितानवच्छेदकयादृशधर्मावच्छि-न्नप्रतियोगिताकनिरुक्तोभयाभावः तादृशयत्किञ्चित्पदेन तादृ-शसाध्यावगाहितात्वमादायैव तत्र विशिष्टान्तराघटितत्वस-म्भवात् प्रतियोगिक इत्यस्य निरर्थकत्वादिति न चाभावोऽवृ-त्तित्वव्याप्यवानित्यत्राभाववृत्ति अवृत्तित्वव्याप्याभावात्मकबा-धेऽव्याप्तिस्तादृशबाधविषयकनिश्चयवृत्तितानवच्छेदकतादृशो-भयाभावप्रतियोगितावच्छेदकसाध्यावगाहितात्वस्य तदन्यवृ-त्त्यभावविषयकनिश्चयवृत्तितानवच्छेदकत्वेनोक्तबाधस्य वृत्त्य-भावरूपविशिष्टान्तरघटितत्वादतस्तद्दलमावश्यकमिति वाच्यम् साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्यापि निरुक्तोभयाभावप्र-तियोगितावच्छेदकस्य तादृशबाधनिश्चयवृत्तितानवच्छेदकत्वेन तादृशपक्षावगाहितात्वमादायैव तत्रापि लक्षणसमन्वयादिति चेन्न अभावः प्रमेयवानवृत्तित्वव्याप्यादित्यत्राभाववृत्ति अवृत्ति-त्वव्याप्याभावस्वरूपस्वरूपासिद्धाव्याप्तिवारणायैव तद्दल-सार्थक्यादन्यथा तादृशोभयाभावप्रतियोगितावच्छेदकीभूतहे-तुमत्पक्षावगाहितात्वस्यैव तादृशस्वरूपासिद्धिभिन्नवृत्त्यभावनि-श्चयवृत्तितानवच्छेदकत्वाद्वृत्त्यभावरूपविशिष्टान्तरघटितत्वा-

त्ताहशस्वरूपासिद्धेरसंग्रहः स्यात् प्रतियोगिकान्तानिवेशे च हे- तुमत्पक्षावगाहितात्वस्य वृत्त्यभावनिश्चयवृत्तितानवच्छेदकत्वे- ऽपि तादृशावगाहितात्वघटितधर्मावच्छिन्नप्रतियोगिताकनि- रुक्तोभयाभावस्य वृत्त्यभावनिश्चयोत्तरानुमितित्वव्यापकत्वा- भावान्नाव्याप्तिरिति भावः। यद्यपि प्रतियोगिकान्तनिवेशेऽभावो धूमान्यधूमवानवृत्तित्वाव्याप्यादित्यत्राभाववृत्ति अवृत्तित्वव्या- प्याभावरूपस्वरूपासिद्धावव्याप्तिर्दुर्वारैव तादृशोभयाभाव- प्रतियोगितावच्छेदकतादृशस्वरूपासिद्धिनिश्चयवृत्तितानवच्छे- दकीभूतहेतुमत्पक्षावगाहितात्वस्य तदन्यवृत्त्यभावनिश्चयवृत्ति- तानवच्छेदकत्वाद्वृत्त्यभावनिश्चयोत्तरानुमितित्वव्यापकं तादृशो- भयाभावप्रतियोगितावच्छेदकत्वाच्च वृत्त्यभावस्यापि तादृश- विशिष्टान्तरत्वात् तथापि तदन्ययद्विषयकनिश्चयवृत्तितानव- च्छेदकतादृशयत्किञ्चिद्धर्मघटितधर्मावच्छिन्ननिरुक्तोभयाभा- वमपहाय तदन्ययद्विषयकनिश्चयोत्तरानुमितिसामान्ये तादृश- निश्चयवृत्तितानवच्छेदकतादृशयत्किञ्चिद्धर्मावच्छिन्नप्रतियो- गिताकोभावः तदघटितत्वस्य विवक्षणान्न दोषः वृत्त्यभावनि- श्चयोत्तरानुमितिसामान्ये वृत्त्यभावनिश्चयवृत्तितानवच्छेदकहे- तुमत्पक्षावगाहितात्वरूपतादृशधर्मघटितधर्मावच्छिन्ननिरुक्तोभ- याभावसत्त्वेऽपि तादृशावगाहितात्वावच्छिन्नप्रतियोगिताका- भावासत्त्वादेव वृत्त्यभावस्य तादृशविशिष्टान्तरत्वाभावादिति न चैवं मेयत्वविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिः यत्किञ्चि- त्पदेन तादृशोभयाभावप्रतियोगितावच्छेदकमेयत्वविशिष्टवह्न्य- भाववद्ध्रदादिनिश्चयवृत्तितानवच्छेदकसाध्यव्याप्यहेतुमत्पक्षा- वगाहितात्वमादाय तत्र विशिष्टान्तराघटितत्वसत्त्वात्तादृशपक्षा- वगाहितात्वावच्छिन्नाभावस्य तदन्यअवृत्त्यभाववद्ध्रदादिविष- यकनिश्चयोत्तरानुमितित्वव्यापकत्वेन वह्न्यभाववद्ध्रदादेः तादृ- शविशिष्टान्तरत्वाभावादिति वाच्यम् दीधित्युक्तलक्षणेऽपि यद्विषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावमपहाय यद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशोभयाभावप्रतियोगि-

तावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात् तथा च यद्विषयकनिश्चयोत्तरानुमितित्वव्यापकानिरुक्तोभयाभावप्रतियोगितावच्छेदकीभूतयद्विषयकनिश्चयवृत्तितानवच्छेदकयादृशधर्मावच्छिन्नप्रतियोगिताकाभावः तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशधर्मावच्छिन्नप्रतियोगिताकाभावः तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकस्तद्घटितत्वमित्यर्थस्य पर्य्यवसिततया साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्य मेयत्वविशिष्टबाधनिश्चयवृत्तितानवच्छेदकत्वेऽपि तादृशावगाहितात्वावच्छिन्नाभावस्य तादृशबाधनिनिश्चयोत्तरानुमितित्वाव्यापकत्वेन यादृशधर्मपदेन साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्य धर्तुमशक्यत्वेन साध्यावगाहितात्वस्यैव धर्तव्यतया तस्य च शुद्धाभावनिश्चयवृत्तितानवच्छेदकतादृशनिश्चयोत्तरानुमितित्वव्यापकाभावप्रतियोगितावच्छेदकत्वं चाक्षतमेवेति वह्न्यभाववद्ध्रदत्वस्य तादृशविशिष्टान्तरत्वेनोक्तातिव्याप्तिरितिभावः । न चैवं पर्वतो वह्न्यभावव्याप्यजलवान निर्जत्वादित्यादौ बाह्निमत्पर्बतादौ जगदीशस्यात्रबदन्तीत्यस्यास्वरसवीजाभिधानाऽसंगतिः अत्रोभयाभावप्रतियोगितावच्छेदकवह्निमत्पर्वतादिनिश्चयवृत्तितानवच्छेदकीभूतसाध्यावगाहितात्वावच्छिन्नाभावस्य वह्निमत्पर्वतादिनिश्चयोत्तरानुमितित्वाव्यापकत्वेन तत्रातिव्याप्त्यसम्भवादिति वाच्यं तत्रातिव्याप्त्यसम्भवेऽपि धूमान्यधूमवान् वह्न्यभावव्याप्यादित्यादौ वह्निमत्पर्वतादावेवातिव्याप्तेस्तात्पर्य्यात् तत्र वह्निमत्पर्वतानिश्चयोत्तरानुमितित्वावच्छेदेनैव तादृशनिश्चयवृत्तितानवच्छेदकीभूतोभयाभावप्रतियोगितावच्छेदकधूमान्यधूमव्याप्यवत्पक्षावगाहितात्वावच्छिन्नाभावस्य सत्त्वाद्धूमान्यधूमव्याप्यवह्न्यभावव्याप्यवानित्याकारकानुमितेरप्रसिद्धत्वादिति ध्येयम् । अत्र कल्पे यद्विषयकनिश्चये तदन्ययद्विषयकनिश्चये च पक्षधर्मिकसाध्यव्यापकीभूताभावप्रतियोगिहेतुनिश्चयान्यत्वासाधारण्यविषयकत्वोभयाभाववत्त्वं निवेशनी-

यमुतेनसाध्यव्यापकीभूताभावप्रतियोगिहेतुमान् पक्ष इत्याका-
रकनिश्चयमादायैव साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपा-
साधारण्ये लक्षणसमन्वयान्नासाधारण्यसंग्रहः नवा प्रमेयत्व-
विशिष्टासाधारण्येऽतिव्याप्तिः नच गृहादौ घटसामान्याभावे
साध्ये नीलघटवद्गृहादावव्याप्तिः तस्य घटवद्गृहस्वरूपानिरु-
क्तविशिष्टान्तरेण घटितत्वदिति वाच्यम् यादृशयादृशाप्रामाण्य-
ज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयावृत्तितादृशविष-
यिताप्रतियोगिको निरुक्तोभयाभावस्तादृशाप्रामाण्यज्ञानाभाव-
विशिष्टतद्रूपावच्छिन्नान्ययद्रूपावच्छिन्नविषयकनिश्चयावृत्ति-
तादृशविषयिताप्रतियोगिकः तद्रूपावच्छिन्नाघटितत्वमित्यर्थक-
रणात् गृहं नीलघटवदिदं घटाभाववति घटप्रकारकमित्यादिज्ञा-
नस्यानुत्तेजकतया नीलघटाभाववति नीलघटप्रकारकमित्या-
कारकाप्रामाण्यग्रहाभावविशिष्टघटाभाववति घटप्रकारकमि-
त्यप्रामाण्यज्ञानविशिष्टगृहं घटवदिति ज्ञाने तादृशविषयि-
ताया अवृत्तित्वविरहेण एवं रीत्या विशेषगुणाभाववान् घटो गु-
णसामान्याभाववानित्यादौ विशेषगुणवद्भेदेऽव्याप्तिर्वारणीया-
इतिकृतंपल्लवितेन। यदि च नव्यानांमते साध्याभाववदवृत्तित्वरु-
पाया एव व्याप्तेरनुमित्युपयोगित्वात्तादृशव्याप्तिविशिष्टहेतुमत्त्वा-
वगाहित्वस्य त्रित्वावच्छिन्नाभावो यद्धर्म्मावच्छेदेन यादृशधर्म
वत्तानिश्चयावृत्तिविषयितप्रतियोगिकः तद्धर्मावच्छेदेन तादृ-
शधर्मवत्त्व प्रकृतसाध्यहेतुकन्यायस्थले दोष इति जगदीश; ।
अत्रायं पूर्वपक्ष; ह्रदो वन्हिमानित्यादौ मेयत्वविशिष्टवन्ह्यभाव-
वद्ध्रदेऽतिव्याप्तिः निरुक्तत्रित्वावच्छिन्नाभावस्य ह्रदत्वव्यापक-
त्वविशिष्टविशेषणतासम्बन्धेन वन्ह्यभावविशिष्टह्रदत्वावच्छेदेन
मेयत्वप्रकारकनिश्चयावृत्तिविषयिताप्रतियोगिकत्वादेवं वन्ह्य-
भाववद्ध्रदविशिष्टमेयत्वेऽतिव्याप्तिः; निरुक्तत्रित्वावच्छिन्ना-
भावस्यवन्ह्यभाववद्ध्रदप्रकारकनिश्चयावृत्तिविषयिताप्रतियो-
गिकत्वादितिचदत्र केचित् निरुक्तत्रित्वावच्छिन्नाभावो यद्ध-
र्मावच्छिन्नविषयकनिश्चयवृत्तित्वे सति यादृशधर्मावच्छिन्न

विषयकानिश्चयवृत्तित्वे सति यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयावृत्तियादृशविषयिताप्रतियोगिकः तद्धर्मावच्छेदेन तादृशधर्मवत्त्वं हेत्वाभासत्वमित्यर्थकरणादुक्तस्थले निरुक्ताभावप्रतियोगिविषयिताया वह्न्यभाववद्धूदविषयकनिश्चयवृत्तित्वविरहेण नातिव्याप्तिरिति ध्येयम । अवच्छेदकावच्छेदेन साध्यकस्थले यद्धर्मविशिष्टे यादृशधर्मवत्तानिश्चयोत्तरानुमितिसामान्ये यद्धर्मावच्छेदेन यादृशधर्मवत्त्वानिश्चयावृत्तिविषयिताप्रतियोगिकनिरुक्तत्रित्वावच्छिन्नाभावः तद्धर्मविशिष्टे तादृशधर्मवत्त्वं दोष इति पर्यवसितार्थः अतो यत्र पर्वतत्वसामानाधिकरण्येन नीलत्वस्य पक्षतावच्छेदकत्वं नीलपर्वतत्वावच्छेदेन वह्नेः साध्यत्वं तत्र सामानाधिकरण्येन नीलत्वाभाववत्पर्वते नातिव्याप्तिः अथ वह्न्यभाववद्धूदत्वाद्यवच्छिन्नविषयिताया जातिमान् वभाववानवच्हिन्त्यादिनिश्चयसाधारणतया तत्र च प्रकृतानुमितिप्रतिबन्धकताया विरहेण बाधप्रभृतौ सर्वत्रासम्भव इति चेन्न यादृशसमुदायत्ववृत्तिनिरूपकताकविषयिता प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टरूपवत्त्वस्य विवक्षितत्वाद् वह्न्यभाववद्धूदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयिता च न जातिमान् वन्ह्यभाववानितिनिश्चयसाधारणीति तज्ज्ञानव्यावृत्तिरिति । निरुक्तासम्भववारणायाव्यापकीभूतविषयिताशून्यत्वनिवेशकृतां गदाधरभट्टाचार्याणामयमाशयः यत्रासद्धेतुविशेषे घटाविषयकं ज्ञानं नियमतो दोषविषयकं जायते दोषाविषयकञ्च पटकालीनघटविषयकमेव जायते तत्रत्यदोषप्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्य घटत्वगतैकत्ववृत्तिनिरूपकताकविषयितायां सत्त्वेन तादृशाङ्कुरविशेषे घटस्य दोषत्वापत्तिरव्यापकीभूतविषयिताशून्यत्वं विना न वारयितुं शक्यत इति । जगदीशेन तादृशमङ्कुरं नाराङ्क्यत इति न कोऽपि दोषः ।

क्रोड़पत्रं समाप्तम्

